# KÂVYAMÂLÂ.

A collection of old and rare Sanskrit Kâvyas, Nâtakas, Champûs, Bhânas, Prahasanas, Chhandas, Alankâras &c.,

## PART V.

EDITED BY

PANDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂNDURANG PARAB

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRNAYA-SÂGARA' PRESS

BOMBAY.

1888.

*Price 1 Rupee*

धैर्याम्बुधिं पशुपतेश्चुलकीकरोति
  कामाक्षि वीक्षणविजृम्भ[illegible]भजन्मा ॥ २० ॥
पीयूषवर्षशिशिरा स्फुरदुच्छ[illegible]
  मैत्री निसर्गमधुरा कृत[illegible]तिः ।
कामाक्षि संश्रितवती वपुरष्टमूर्ते-
  र्ज्योत्स्नायते भगवति त्वदपाङ्गमाला ॥ २१ ॥

अम्ब स्मरप्रतिभटस्य वपुर्मनोज्ञ-
  मम्भोजकाननमिवाञ्चितकण्टकाभम् ।
भृङ्गीव चुम्बति सदैव सपक्षपाता
  कामाक्षि कोमलरुचिस्त्वदपाङ्गमाला ॥ २२ ॥

केशप्रभापटलनीलवितानजाले
  कामाक्षि कुण्डलमणिच्छविदीपशोभे ।
कम्रे कटाक्षरुचिरङ्गतले कृपाख्या
  शैलूषकी नटति शंकरवल्लभे ते ॥ २३ ॥

अत्यन्तशीतलमतन्द्रयतु क्षणार्ध-
  मस्तोकविभ्रममनङ्गविलासकन्दम् ।
अल्पस्मितादृतमपारकृपाप्रवाह-
  मक्षिप्ररोहमचिरान्मयि कामकोटि ॥ २४ ॥

मन्दाक्षरागतरलीकृतिपारतन्त्र्या-
  त्कामाक्षि मन्थरतरां त्वदपाङ्गदोलाम् ।
आरुह्य मन्दमतिकौतुकशालि चक्षु-
  रानन्दमेति मुहुरर्धशशाङ्कमौलेः ॥ २५ ॥

त्रैयम्बकं त्रिपुरसुन्दरि हर्म्यभूमि-
  रङ्गं विहारसरसी करुणाप्रवाहः ।

---

१. अगस्त्य'. २. शिवस्य. ३. नटी. ४. 'तरलीकृत' इति ग-पाठः ५ मन्दमिति क्रियाविशेषणम्. ६. त्रैयम्बकमङ्गं हर्म्यभूमिरित्यन्वय.. ७. 'करुणाकटाक्ष' इति घ-पाठः.

दासाश्च वासवमुखाः प[illegible]पालनीयं
  कामाक्षि वि[illegible] वीक्षणभूभृतस्ते ॥ २६ ॥
वागीश्वरी सह[illegible]मेन लक्ष्मी-
  र्भ्रूवल्लरीवश[illegible]वनानि गेहम् ।
रूपं त्रिलोकनयनामृतमम्ब तेषां
  कामाक्षि येषु तव वीक्षणपारतन्त्री ॥ २७ ॥
माहेश्वरं झटिति मानसमीनमम्ब
  कामाक्षि धैर्यजलधौ नितरां निमग्नम् ।
जालेन शृङ्खलयति त्वदपाङ्गनाम्ना
  विस्तारितेन विषमायुधदाशकोऽसौ ॥ २८ ॥
उन्मथ्य बोधकमलाकरमम्ब जाड्य-
  स्तम्बेरमं मम मनोविपिने भ्रमन्तम् ।
कुण्ठीकुरुष्व तरसा कुटिलाग्रसीम्ना
  कामाक्षि तावककटाक्षमहाङ्कुशेन ॥ २९ ॥
उद्वेल्लितस्तबकितैर्ललितैर्विलासै-
  रुत्थाय देवि तव गाढकटाक्षकुञ्जात् ।
दूरं पलाययतु मोहमृगीकुलं मे
  कामाक्षि सत्वरमनुग्रहकेसरीन्द्रः ॥ ३० ॥
स्नेहाद्रतां विदलितोत्पलकान्तिचोरां
  जेतारमेव जगदीश्वरि जेतुकामः ।
मानोद्धतो मकरकेतुरसौ धुनीते
  कामाक्षि तावककटाक्षकृपाणवल्लीम् ॥ ३१ ॥
श्रौतीं व्रजन्नपि सदा सरणिं मुनीनां
  कामाक्षि संततमपि स्मृतिमार्गगामी ।
कौटिल्यमम्ब कथमस्थिरतां च धत्ते
  चौर्यं च पङ्कजरुचां त्वदपाङ्गपातः ॥ ३२ ॥

1. शिवमेव.

नित्यं श्रुतेः परिचितौ यतमानमेव
  नीलोत्पलं निजसमीपनिवासलोलम् ।
प्रीत्यैव पाठयति वीक्षणदेशिकेन्द्रः[1]
  कामाक्षि किं नु[2] तव कालिमसंप्रदायम् ॥ ३३ ॥

भ्रान्त्वा मुहुः स्तवकितस्मितफेनराशौ
  कामाक्षि वक्त्ररुचिसंचयवारिराशौ ।
आनन्दति त्रिपुरमर्दननेत्रलक्ष्मी-
  रालम्ब्य देवि तव मन्दमपाङ्गसेतुम् ॥ ३४ ॥

श्यामा[3] तव त्रिपुरसुन्दरि लोचनश्रीः
  कामाक्षि कन्दलितमेदुरतारकान्तिः ।
ज्योत्स्नावती स्मितरुचापि कथं तनोति
  स्पर्धामहो कुवलयैश्च तथा चकोरैः ॥ ३५ ॥

कालाञ्जनं च तव देवि निरीक्षणं च
  कामाक्षि साम्यसरणिं समुपैति कान्त्या ।
निःशेषनेत्रसुलभं जगतीषु पूर्व-
  मन्यत्त्रिनेत्रसुलभं तुहिनाद्रिकन्ये ॥ ३६ ॥

धूमाङ्कुरो मकरकेतनपावकस्य
  कामाक्षि नेत्ररुचिनीलिमचातुरी ते ।
अत्यन्तमद्भुतमिदं नयनत्रयस्य
  हर्षोदयं जनयते हरिणाङ्कमौलेः ॥ ३७ ॥

आरम्भलेशसमये तव वीक्षणस्य
  कामाक्षि मूकमपि वीक्षणमात्रनम्रम् ।
सर्वज्ञता सकललोकसमक्षमेव
  कीर्तिः[4] स्वयंवरणमाल्यवती वृणीते ॥ ३८ ॥

---

१. गुरुः. २. 'तु' इति घ-पाठः. ३. श्यामवर्णा, गात्रिश्च. ४. कीर्तिरेव स्वय-वरणमाल्यं तद्वती सर्वज्ञता.

कालाम्बुवाह इव ते परितापहारी
 कामाक्षि पुष्करमधः कुरुते कटाक्षः ।
पूर्वः परं क्षणरुचा समुपैति मैत्री-
 मन्यस्तु संततरुचिं प्रकटीकरोति ॥ ३९ ॥

सूक्ष्मेऽपि दुर्गमतरेऽपि गुरुप्रसाद-
 साहाय्यकेन विचरन्नपवर्गमार्गे ।
संसारपङ्कनिचये न पतत्यमुं ते
 कामाक्षि गाढमवलम्ब्य कटाक्षयष्टिम् ॥ ४० ॥

कामाक्षि संततमसौ हरिनीलरत्न-
 स्तम्भे कटाक्षरुचिपुञ्जमये भवत्याः ।
बद्धोऽपि भक्तिनिगडैर्मम चित्तहस्ती
 स्तम्भं च बन्धमपि मुञ्चति हन्त चित्रम् ॥ ४१ ॥

कामाक्षि कार्ष्ण्यमपि संततमञ्जनं च
 बिभ्रन्निसर्गतरलोऽपि भवत्कटाक्षः ।
वैमल्यमन्वहमनञ्जनतां च भूयः
 स्थैर्यं च भक्तहृदयाय कथं ददाति ॥ ४२ ॥

मन्दस्मितस्तबकितं मणिकुण्डलांशु-
 स्तोमप्रवालरुचिरं शिशिरीकृताशम् ।
कामाक्षि राजति कटाक्षरुचेः कदम्ब-
 मुद्यानमम्ब करुणाहरिणेक्षणायाः ॥ ४३ ॥

कामाक्षि तावककटाक्षमहेन्द्रनील-
 सिंहासनं श्रितवतो मकरध्वजस्य ।
साम्राज्यमङ्गलविधौ मणिकुण्डलश्री-
 र्नीराजनोत्सवतरङ्गितदीपमाला ॥ ४४ ॥

---

१. कमलं तिरस्करोति, मेघश्च पुष्करं जलमधः पातयति. २. विद्युता; क्षणमात्रस्थायिन्या कान्त्या.

मातः क्षणं स्नपय मां तव वीक्षितेन
मन्दाक्षितेन[1] सुजनैरपरोक्षितेन ।
कामाक्षि कर्मतिमिरोत्करभास्करेण
श्रेयस्करेण मधुपद्युतितस्करेण ॥ ४५ ॥

प्रेमापगापयसि मज्जनमारचय्य
युक्तः स्मितांशुकृतभस्मविलेपनेन ।
कामाक्षि कुण्डलमणिद्युतिभिर्जटालः
श्रीकण्ठमेव भजते तव दृष्टिपातः ॥ ४६ ॥

कैवल्यदाय करुणारसकिंकराय
कामाक्षि कन्दलितविभ्रमशंकराय ।
आलोकनाय तव भक्तशिवंकराय
मातर्नमोऽस्तु परतन्त्रितशंकराय ॥ ४७ ॥

साम्राज्यमङ्गलविधौ मकरध्वजस्य
लोलालकालिकृततोरणमाल्यशोभे ।
कामेश्वरि प्रचलदुत्पल[2]वैजयन्ती-
चातुर्यमेति तव चञ्चलदृष्टिपातः ॥ ४८ ॥

मार्गेण मञ्जुकचकान्तितमोवृतेन[3]
मन्दायमानगमना मदनातुरासौ ।
कामाक्षि दृष्टिरयते तव शंकराय
संकेतभूमिमचिरादभिसारिकेव ॥ ४९ ॥

व्रीडानुवृत्तिरमणीकृतिसाहचर्या
शैवालितां गलरुचा शशिशेखरस्य ।
कामाक्षि कान्तिसरसीं त्वदपाङ्गलक्ष्मी-
र्मन्दं समाश्रयति मज्जनखेलनाय ॥ ५० ॥

---

१. 'मन्देक्षितेन' इति ग-पाठ. २ 'प्रचुरमुत्पल' इति ग-पाठ. ३. 'तमोघतेन' इति पुस्तकेषु पाठः.

काषायमंशुकमिव प्रकटं दधानो
माणिक्यकुण्डलरुचिं ममताविरोधी।
श्रुत्यन्तसीमनि रतः सुतरां चकास्ति
कामाक्षि तावककटाक्षयतीश्वरोऽसौ॥ ९१॥

पाषाण एव हरिनीलमणिर्दिनेषु
प्रम्लानतां कुवलयं प्रकटीकरोति।
नैमित्तिको जलदमेचकिमा ततस्ते
कामाक्षि शून्यमुपमानमपाङ्गलक्ष्म्याः॥ ९२॥

शृङ्गारविभ्रमवती सुतरां सलज्जा
नासाग्रमौक्तिकरुचा कृतमन्दहासा।
श्यामा कटाक्षसुषमा तव युक्तमेत-
त्कामाक्षि चुम्बति दिगम्बरवक्त्रबिम्बम्॥ ९३॥

नीलोत्पलेन मधुपेन च दृष्टिपातः
कामाक्षि तुल्य इति ते कथमामनन्ति।
शैत्येन निन्दति यदन्वहमिन्दुपादा-
न्पाथोरुहेण यदसौ कलहायते च॥ ९४॥

ओष्ठप्रभापटलविद्रुममुद्रिते ते
भ्रूवल्लिवीचिसुभगे मुखकान्तिसिन्धौ।
कामाक्षि वारिभरपूरणलम्बमान-
कालाम्बुवाहसरणिं लभते कटाक्षः॥ ९५॥

मन्दस्मितैर्धवलिता मणिकुण्डलांशु-
संपर्कलोहितरुचिस्त्वदपाङ्गधारा।
कामाक्षि मल्लिकुसुमैर्नवपल्लवैश्च
नीलोत्पलैश्च रचितेव विभाति माला॥ ९६॥

कामाक्षि शीतलकृपारसनिर्झराम्भः-
संपर्कपक्ष्मलरुचिस्त्वदपाङ्गमाला।

गोभिः[1] सदा पुररिपोरभिलष्यमाणा[2]
दूर्वाकदम्बकविडम्बनमातनोति ॥ ५७ ॥

हृत्पङ्कजं मम विकासयतु प्रमुष्ण-
न्नुल्लासमुत्पलरुचेस्तमसां निरोद्धा।
दोषानुषङ्गजडतां जगतां धुनानः
कामाक्षि वीक्षणविलासदिनोदयस्ते ॥ ५८ ॥

चक्षुर्विमोहयति चन्द्रविभूषणस्य
कामाक्षि तावककटाक्षतमःप्ररोहः।
प्रत्यङ्मुखं तु नयनं स्तिमितं मुनीनां
प्राकाश्यमेव नयतीति परं विचित्रम् ॥ ५९ ॥

कामाक्षि वीक्षणरुचा युधि निर्जितं ते
नीलोत्पलं निरवशेषगताभिमानम्।
आगत्य तत्परिसरं श्रवणावतंस-
व्याजेन नूनमभयार्थनमातनोति[3] ॥ ६० ॥

आश्चर्यमम्ब वदनाभ्युदयावलम्बी
कामाक्षि चञ्चलनिरीक्षणविभ्रमस्ते।
धैर्यं विधूय तनुते हृदि रागबन्धं
शंभोस्तदेव विपरीततया मुनीनाम् ॥ ६१ ॥

जन्तोः सकृत्प्रणमतो जगदीड्यतां[4] च
तेजस्वितां च निशितां च मतिं सभायाम्।
कामाक्षि माक्षिकझरीमिव[5] वैखरीं च
लक्ष्मीं च पक्ष्मलयति क्षणवीक्षणं ते ॥ ६२ ॥

कादम्बिनी किमयते न जलानुषङ्गं
भृङ्गावली किमुररीकुरुते न पङ्कम्।

१. 'दृष्टिभिः; (पक्षे) धेनुभि.. २ 'अभिलक्ष्यमाणा' इति क-ख-ग-पाठः. ३. 'अभयार्थित' इति घ-पाठः. ४. जगत्पूज्यताम्. ५. मधुधारामिव वाणीम्.

किं वा कलिन्दतनया सहते न गङ्गां
कामाक्षि निश्चयपदं न तवाक्षिलक्ष्मीः ॥ ६३ ॥

काकोलपावकतृणीकरणेऽपि दक्षः
कामाक्षि बालकसुधाकरशेखरस्य ।
अत्यन्तशीतलतमोऽप्यनुपारतं ते
चित्तं विमोहयति चित्रमयं कटाक्षः ॥ ६४ ॥

कार्पण्यपूररसवर्धितमम्ब मोह-
कन्दोद्गतं भवमयं विषपादपं मे ।
तुङ्गं छिनत्तु तुहिनाद्रिसुते भवत्याः
काञ्चीपुरेश्वरि कटाक्षकुठारधारा ॥ ६५ ॥

कामाक्षि घोरभवरोगचिकित्सनार्थ-
मभ्यर्थ्य, देशिककटाक्षभिषक्प्रसादात् ।
तत्रापि देवि लभते सुकृती कदाचि-
दत्यन्तदुर्लभमपाङ्गमहौषधं ते ॥ ६६ ॥

कामाक्षि देशिककृपाङ्कुरमाश्रयन्तो
नानातपोनियमनाशितपाशबन्धाः ।
वासालयं तव कटाक्षममुं महान्तो
लब्ध्वा सुखं समधियो विचरन्ति लोके ॥ ६७ ॥

साकूतसल्लपितगर्भितमुग्धहासं
व्रीडानुरागसहचारिविलोकनं ते ।
कामाक्षि कामपरिपन्थिनि मारवीर-
साम्राज्यविभ्रमदशां सफलीकरोति ॥ ६८ ॥

कामाक्षि विभ्रमबलैकनिधिर्विधाय
भ्रूवल्लिचापकुटिलीकृतिमेव चित्रम् ।
स्वाधीनतां तव निनाय शशाङ्कमौले-
रङ्गार्धराज्यसुखलाभमपाङ्गवीरः ॥ ६९ ॥

१. विषाग्निनिवारणे. २. 'दक्ष' इति पुस्तकेषु पाठः. ३. शिवस्य.

कामाङ्कुरैकनिलयस्तव दृष्टिपातः
कामाक्षि भक्तमनसां [1]प्रददाति कामान् ।
[2]रागान्वितः स्वयमपि प्रकटीकरोति
वैराग्यमेव कथमेष महामुनीनाम् ॥ ७० ॥

कालाम्बुवाहनिवहैः कलहायते ते
कामाक्षि कालिममदेन सदा कटाक्षः ।
चित्रं तथापि नितराममुमेव दृष्ट्वा
सोत्कण्ठ एव रमते किल नीलकण्ठः ॥ ७१ ॥

कामाक्षि मन्मथरिपुं प्रति मारताप-
मोहान्धकारजलदागमनेन नृत्यन् ।
दुष्कर्मकञ्चुकिकुलं कवलीकरोतु
व्यामिश्रमेचकरुचिस्त्वदपाङ्गकेकी ॥ ७२ ॥

कामाक्षि मन्मथरिपोरवलोकनेषु
कान्तं पयोजमिव तावकमाक्षिपातम् ।
प्रेमागमो दिवसवद्विकचीकरोति
लज्जाभरो रजनिवन्मुकुलीकरोति ॥ ७३ ॥

मूको विरिञ्चति परं पुरुषः कुरूपः
कंदर्पति त्रिदशराजति किंपचानः ।
कामाक्षि केवलमुपक्रमकाल एव
लीलातरङ्गितकटाक्षरुचः क्षणं ते ॥ ७४ ॥

नीलालका मधुकरन्ति मनोज्ञनासा-
मुक्तारुचः प्रकटकन्दविसाङ्कुरन्ति ।
कारुण्यमम्ब मकरन्दति कामकोटि
मन्ये ततः कमलमेव [3]विलोकनं ते ॥ ७५ ॥

---

१. 'प्रददातु' इति ग-पाठः. २. 'मार्गान्वितः' इति घ-पाठः. ३. 'विलोचन' इति क-ग-घ-पाठः.

आकाङ्क्ष्यमाणफलदानविचक्षणायाः
कामाक्षि तावककटाक्षककामधेनोः ।
संपर्क एव कथमम्ब विमुक्तपाश-
बन्धाः स्फुटं तनुभृतः पशुतां त्यजन्ति ॥ ७६ ॥

संसारघर्मपरितापजुषां नराणां
कामाक्षि शीतलतराणि तवेक्षितानि ।
चन्द्रातपन्ति घनचन्दनकर्दमन्ति
मुक्तागुणन्ति हिमवारिनिषेचनन्ति ॥ ७७ ॥

प्रेमाम्बुराशिसततस्नपितानि चित्रं
कामाक्षि तावककटाक्षनिरीक्षणानि ।
संधुक्षयन्ति मुहुरिन्धनराशिरीत्या
मारद्रुहो मनसि मन्मथचित्रभानुम् ॥ ७८ ॥

कालाञ्जनप्रतिभटं कमनीयकान्त्या
कंदर्पतन्त्रकलया कलितानुभावम् ।
काञ्चीविहाररसिके कलुषार्तिचोरं
कल्लोलयस्व मयि ते करुणाकटाक्षम् ॥ ७९ ॥

क्रान्तेन मन्मथमदेन विमोह्यमान-
स्वान्तेन चूततरुमूलगतस्य पुंसः ।
कान्तेन किंचिदवलोकय लोचनस्य
प्रान्तेन मां जननि काञ्चिपुरीविभूषे ॥ ८० ॥

कामाक्षि केऽपि सुजनास्त्वदपाङ्गसङ्गे
कण्ठेन कन्दलितकालिमसंप्रदायाः ।
उत्तंसकल्पितचकोरकुटुम्बपोषा
नक्तंदिवप्रसवभूनयना भवन्ति ॥ ८१ ॥

नीलोत्पलप्रसवकान्तिनिदर्शनेन
कारुण्यविभ्रमजुषा तव वीक्षणेन ।

१. कामाग्निम्. २. एकाम्रनाथस्य. ३. सूर्यचन्द्रनेत्राः. ४. शिवत्वं यान्तीत्यर्थः.

कामाक्षि कर्मजलधेः कलशीसुतेन[1]
पाशत्रयाद्वयममी परिमोचनीयाः ॥ ८२ ॥

अत्यन्तचञ्चलमकृत्रिममञ्जनं किं
झंकारभङ्गिरहिता किमु भृङ्गमाला ।
धूमाङ्कुरः किमु हुताशनसङ्गहीनः
कामाक्षि नेत्ररुचिनीलिमकन्दली ते ॥ ८३ ॥

कामाक्षि नित्यमयमञ्जलिरस्तु मुक्ति-
बीजाय विभ्रममदोदयघूर्णिताय ।
कंदर्पदर्पपुनरुद्भवसिद्धिदाय
कल्याणदाय तव देवि दृगञ्चलाय ॥ ८४ ॥

दर्पाङ्कुरो मकरकेतनविभ्रमाणां
निन्दाङ्कुरो विदलितोत्पलचातुरीणाम् ।
दीपाङ्कुरो भवतमिस्रकदम्बकानां
कामाक्षि पालयतु मां त्वदपाङ्गपातः ॥ ८५ ॥

कैवल्यदिव्यमणिरोहणपर्वतेभ्यः
कारुण्यनिर्झरपयःकृतमज्जनेभ्यः ।
कामाक्षि किंकरितशंकरमानसेभ्य-
स्तेभ्यो नमोऽस्तु तव वीक्षणविभ्रमेभ्यः ॥ ८६ ॥

अल्पीय एव नवमुत्पलमम्बहीना
मीनस्य सा सरणिरम्बुरुहां च कि वा ।
दूरे मृगी तदसमञ्जसमञ्जनं च
कामाक्षि वीक्षणरुचौ नव तर्कयामः ॥ ८७ ॥

मिश्रीभवद्गरलपङ्किलशांकरोरः-
सीमाङ्गणे किमपि रिङ्खणमादधानः ।
हेलावधूतललितश्रवणोत्पलोऽसौ
कामाक्षि बाल इव राजति ते कटाक्षः ॥ ८८ ॥

---

1. अगस्त्येन.

प्रौढीकरोति विदुषां नवसूक्तिधाटी-
चूताटवीषु बुधकोकिललाल्यमानम् ।
माध्वीरसं परिमलं च निरर्गलं ते
कामाक्षि वीक्षणविलासवसन्तलक्ष्मीः ॥ ८९ ॥

कूलंकषं वितनुते करुणाम्बुवर्षी
सारस्वतं सुकृतिनः सुलभं प्रवाहम् ।
तुच्छीकरोति यमुनाम्बुतरङ्गभङ्गीं
कामाक्षि किं तव कटाक्षमहाम्बुवाहः ॥ ९० ॥

जागर्ति देवि करुणा शुक[1]सुन्दरी ते
ताटङ्करत्नरुचिदाडिमखण्डशोणे ।
कामाक्षि निर्भरकटाक्षमरीचिपुञ्ज-
माहेन्द्रनीलमणिपञ्जरमध्यभागे ॥ ९१ ॥

कामाक्षि सत्कुवलयस्य सगोत्रभावा-
दाक्रामति श्रुतिमसौ तव दृष्टिपातः ।
किं च स्फुटं कुटिलतां प्रकटीकरोति
भ्रूवल्लरीपरिचितस्य फलं किमेतत् ॥ ९२ ॥

एषा तवाक्षिसुषमा विषमायुधस्य
नाराचवर्षलहरी नगराजकन्ये ।
शङ्के करोति शतधा हृदि धैर्यमुद्रां
श्रीकामकोटि यदसौ शिशिरांशुमौलेः ॥ ९३ ॥

बाणेन पुष्पधनुषः परिकल्प्यमान-
त्राणेन भक्तमनसां करुणाकरेण ।
कोणेन कोमलदृशस्तव कामकोटि
शोणेन शोषय शिवे मम शोकसिन्धुम् ॥ ९४ ॥

मारद्रुहो मुकुटसीमनि लाल्यमाने
मन्दाकिनीपयसि ते कुटिलं चरिष्णुः ।

---

1. शुकी.

कामाक्षि कोपरभसाद्वलमानमीन-
संदेहमङ्कुरयति क्षणमक्षिपातः ॥ ९५ ॥
कामाक्षि संवलितमौक्तिककुण्डलांशु-
चञ्चत्सितश्रवणचामरचातुरीकः ।
स्तम्भे निरन्तरमपाङ्गमये भवत्या
बद्धश्चकास्ति मकरध्वजमत्तहस्ती ॥ ९६ ॥
यावत्कटाक्षरजनीसमयागमस्ते
कामाक्षि तावदचिरान्नमतां नराणाम् ।
आविर्भवत्यमृतदीधितिविम्बमम्ब-
संविन्मयं हृदयपूर्वगिरीन्द्रशृङ्गे ॥ ९७ ॥
कामाक्षि कल्पविटपीव भवत्कटाक्षो
दित्सुः समस्तविभव नमतां नराणाम् ।
भृङ्गस्य नीलनलिनस्य च कान्तिसंप-
त्सर्वस्वमेव हरतीति परं विचित्रम् ॥ ९८ ॥
अज्ञातभक्तिरसमप्रसरद्विवेक-
मत्यन्तगर्वमनधीतसमस्तशास्त्रम् ।
[2]अप्राप्तसत्यमसमीपगतं च मुक्तेः
कामाक्षि नैव तव काङ्क्षति दृष्टिपातः ॥ ९९ ॥
अत्यन्तशीतलमनर्गलकर्मपाक-
काकोलहारि सुलभं सुमनोभिरेतत् ।
पीयूषमेव तव वीक्षणमम्ब किं तु
कामाक्षि नीलमिदमित्ययमेव भेदः ॥ १०० ॥

इति श्रीमूककविसार्वभौमकृतौ पञ्चशत्यां कटाक्षशतकं प्रथमम् ।

---

मन्दस्मितशतकम् ।

बध्नीमो वयमञ्जलिं प्रतिदिनं बन्धच्छिदे देहिनां
कंदर्पागमतन्त्रमूलगुरवे कल्याणकेलीभुवे ।

---

१. 'स्मित' इति क-ख-ग-पाठ.. २. 'अप्राप्यसत्य' इति क-ख-ग-पाठः.

कामाक्ष्या घनसारपुञ्जरजसे कामद्रुहश्चक्षुषां
मन्दारस्तवकप्रभामदजुषे मन्दस्मितज्योतिषे ॥ १ ॥
सध्रीचे नवमल्लिकासुमनसां नासाग्रमुक्तामणे-
राचार्याय मृणालकाण्डमहसां नैसर्गिकाय द्विषे ।
स्वर्धुन्या सहयुध्वने हिमरुचेरर्धासनाध्यासिने
कामाक्ष्याः स्मितमञ्जरीधवलिमाद्वैताय तस्मै नमः ॥ २ ॥
कर्पूरद्युतिचातुरीमतितरामल्पीयसीं कुर्वती
दौर्भाग्योदयमेव संविदधती दोषाकरीणां त्विषाम् ।
क्षुल्लानेव मनोज्ञमल्लिनिकरान्फुल्लानपि व्यञ्जती
कामाक्ष्या मृदुलस्मितांशुलहरी कामप्रसूरस्तु मे ॥ ३ ॥
या पीनस्तनमण्डलोपरि लसत्कर्पूरलेपायते
या नीलेक्षणरात्रिकान्तिततिषु ज्योत्स्नाप्ररोहायते ।
या सौन्दर्यधुनीतरङ्गततिषु व्यालोलहंसायते
कामाक्ष्याः शिशिरीकरोतु हृदयं सा मे स्मितप्राचुरी ॥ ४ ॥
येषां गच्छति पूर्वपक्षसरणिं कौमुद्वतः श्वेतिमा
येषां संततमारुरुक्षति तुलाकक्षां शरच्चन्द्रमाः ।
येषामिच्छति कम्बुरप्यसुलभामन्तेवसत्प्रक्रियां
कामाक्ष्या ममतां हरन्तु मम ते हासत्विषामङ्कुराः ॥ ५ ॥
आशासीमसु संततं विदधती नैशाकरीं व्याक्रियां
काशानामभिमानभङ्गकलनाकौशल्यमाबिभ्रती ।
ईशानेन विलोकिता सकुतुकं कामाक्षि ते कल्मष-
क्लेशापायकरी चकास्ति लहरी मन्दस्मितज्योतिषाम् ॥ ६ ॥
आरूढस्य समुन्नतस्तनतटीसाम्राज्यसिंहासनं
कंदर्पस्य विभोर्जगत्त्रयजयप्राकट्यमुद्रानिधेः ।

१. 'सध्रीचे', 'आचार्याय', इत्यादिपदानि तुल्यता लक्षयन्ति. २. 'कौमुद्वतश्वेतिमा' इति ख-ग-पाठः.

यस्याश्चामरचातुरीं कलयते रश्मिच्छटाचञ्चला
सा मन्दस्मितमञ्जरी भवतु नः कामाय कामाक्षि ते[1] ॥ ७ ॥
शंभोर्या परिरम्भसंभ्रमविधौ नैर्मल्यसीमानिधि-
र्गैर्वाणीव[2] तरङ्गिणी कृतमृदुस्यन्दां कलिन्दात्मजाम् ।
कल्माषीकुरुते कलङ्कसुषमां कण्ठस्थलीचुम्बिनीं
कामाक्ष्याः स्मितकन्दली भवतु सा कल्याणसंदोहिनी ॥ ८ ॥
जेतुं हारलतामिव स्तनतटीं संजग्मुषी संततं
गन्तुं निर्मलतामिव द्विगुणितां मग्ना कृपास्रोतसि ।
वक्तुं विस्मयनीयतामिव हरं रागाकुलं कुर्वती
मञ्जुस्ते स्मितमञ्जरी भवभयं मथ्नातु कामाक्षि मे ॥ ९ ॥
श्वेतापि प्रकटं निशाकररुचां मालिन्यमातन्वती
शीतापि स्मरपावकं पशुपतेः संधुक्षयन्ती सदा ।
स्वाभाव्यादधराश्रितापि नमतामुच्चैर्दिशन्ती गतिं
कामाक्षि स्फुटमन्तरा स्फुरतु नस्त्वन्मन्दहासप्रभा ॥ १० ॥
वक्त्रश्रीसरसीजले तरलितभ्रूवल्लिकल्लोलिते
कालिम्ना दधती कटाक्षजनुषा माधुव्रतीं व्याप्तिम् ।
निर्निद्रामलपुण्डरीककुहना[3]पाण्डित्यमाविभ्रती
कामाक्ष्याः स्मितचातुरी मम मनःकातर्यमुन्मूलयेत् ॥ ११ ॥
नित्यं बाधितबन्धुजीव[4]मधरं मैत्रीजुषं पल्लवैः[5]
शुद्धस्य द्विजमण्डलस्य[6] च तिरस्कर्तारमप्याश्रिता ।
या वैमल्यवती सदैव नमतां चेतः पुनीतेतरां
कामाक्ष्या हृदयं प्रसादयतु मे सा मन्दहासप्रभा ॥ १२ ॥
द्रुह्यन्ती तमसे मुहुः कुमुदिनीसाहाय्यमाविभ्रती
यान्ती चन्द्रकिशोरशेखरवपुःसौधाङ्गणे प्रेङ्खणम् ।

---

१. 'मे' इति ग-पाठः. २ गङ्गेव. ३. कुहना दम्भचर्या. ४ बन्धूना जीव.; (पक्षे) बन्धुजीवो बन्धूकापरपर्यायो रक्तपुष्पविशेषः. ५. विटैः; (पक्षे) किसलयैः. ६. ब्राह्मणसमूहस्य; (पक्षे) दन्तपङ्क्तेः.

ज्ञानाम्भोनिधिवीचिकां सुमनसां कूलंकषां कुर्वती
कामाक्ष्याः स्मितकौमुदी हरतु मे संसारतापोदयम् ॥ १३ ॥
काश्मीरद्रवधातुकर्दमरुचा कल्माषतां बिभ्रती
हंसौघैरिव कुर्वती परिचितिं हारीकृतैर्मौक्तिकैः ।
वक्षोजन्मतुषारशैलकटके संचारमातन्वती
कामाक्ष्या मृदुलस्मितद्युतिमयी भागीरथी भासते ॥ १४ ॥
कम्बोर्वंशपरम्परा इव कृपासंतानवल्लीभुवः
संफुल्लस्तबका इव प्रसृमरा मूर्ताः प्रसादा इव ।
वाक्पीयूषकणा इव त्रिपथगा पर्यायभेदा इव
भ्राजन्ते तव मन्दहासकिरणाः काञ्चीपुरीनायिके ॥ १५ ॥
वक्षोजे घनसारपत्ररचनाभङ्गीसपत्नायिता
कर्णे बन्धुरदन्तपत्रकुहना व्यापारमुद्रायिता ।
ओष्ठश्रीनिकुरुम्बपल्लवपुटे प्रेङ्खत्प्रसूनायिता
कामाक्षि स्फुरतां मदीयहृदये त्वन्मन्दहासप्रभा ॥ १६ ॥
येषां बिन्दुरिवोपरिप्रचलितो नासाग्रमुक्तामणि-
र्येषां दीन इवाधिकण्ठमयते हारः करालम्बनम् ।
येषां बन्धुरिवोष्ठयोररुणिमा धत्ते स्वयं रञ्जनं
कामाक्ष्याः प्रभवन्तु ते मम शिवोल्लासाय हासाङ्कुराः ॥ १७ ॥
या जाड्याम्बुनिधिं क्षिणोति भजतां वैरायते कैरवै-
र्नित्यं या नियमेन या च यतते कर्तुं त्रिनेत्रोत्सवम् ।
बिम्बं चान्द्रमसं च वञ्चयति या गर्वेण सा तादृशी
कामाक्षि स्मितमञ्जरी तव कथं ज्योत्स्नेत्यसौ कीर्त्यते ॥ १८ ॥
आरूढा रभसात्पुरः पुररिपोराश्लेषणोपक्रमे
या ते मातरुपैति दिव्यतटिनीशङ्काकरी तत्क्षणम् ।
ओष्ठं वेपयति भ्रुवौ कुटिलयत्यानम्रयत्याननं
तां वन्दे मृदुहासपूरसुषमामेकाम्रनाथप्रिये ॥ १९ ॥

---

१. 'धामकर्दम' इति ग-पाठः.

वक्त्रेन्दोस्तव चन्द्रिका स्मितरुचिर्वल्गु स्फुरन्ती सतां
स्याच्चेद्युक्तमिदं चकोरमनसां कामाक्षि कौतूहलम् ।
एतच्चित्रमहर्निशं यदधिकामेकां सदा गाहते
बिम्बोष्ठद्युमणिप्रभास्वपि च यद्बिब्बोकमालम्बते ॥ २० ॥

साहाय्यं कलशाम्बुधेर्वहति ते कामाक्षि मन्दस्मितं
शोभामोष्ठरुचा च विद्रुमभवामेतद्विदां ब्रूमहे ।
एतस्मादुदितां पुरा किल पपौ शर्वः पुराणः पुमा-
नेतन्मध्यसमुद्भवां रसयते माधुर्यरूपां सुधाम् ॥ २१ ॥

उत्तुङ्गस्तनकुम्भशैलकटके विस्तारिकस्तूरिका-
पत्रश्रीजुषि चञ्चला स्मितरुचः कामाक्षि ते कोमलाः ।
संध्यादीधितिरञ्जिता इव मुहुः सान्द्राधरज्योतिषा
व्यालोलामलशारदाभ्रशकलव्यापारमातन्वते ॥ २२ ॥

क्षीरं दूरत एव तिष्ठतु कथं वैमल्यमात्रादिदं
मातस्ते सहपाठवीथिमयतां मन्दस्मितैर्मञ्जुलैः ।
किं चेयं तु भिदास्ति दोहनवशादेतत्तु संजायते
कामाक्षि स्वयमर्थितं प्रणमतामेतत्तु दोदुह्यते ॥ २३ ॥

कर्पूरैरमृतांशुभिर्जननि ते कान्तैश्च चन्द्रातपै-
र्मुक्ताहारगुणैर्मृणालवलयैर्मुग्धस्मितश्रीरियम् ।
श्रीकाञ्चीपुरनायिके समतया संस्तूयते सज्जनै-
स्तत्तादृङ् मम तापशान्तिविधये किं देवि मन्दायते ॥ २४ ॥

मध्ये गर्भितमञ्जुवाक्यलहरीमाध्वीझरीशीतला
मन्दारस्तबकायते जननि ते मन्दस्मितांशुच्छटा ।
यस्या वर्धयितुं मुहुर्विकसनं कामाक्षि कामद्रुहो
वल्गुर्वीक्षणविभ्रमव्यतिकरो वासन्तमासायते ॥ २५ ॥

बिम्बोष्ठद्युतिपुञ्जरञ्जितरुचिस्त्वन्मन्दहासच्छटा
कल्याणं गिरिसार्वभौमतनये कल्लोलयत्वाशु मे ।

फुल्लन्मल्लिपिनद्धहल्लकमयी मालेव या पेशला
श्रीकाञ्चीश्वरि मारमर्दितुरुरोमध्ये मुहुर्लम्बते ॥ २६ ॥
बिभ्राणा शरदभ्रविभ्रमदशां विद्योतमानाप्यसौ
कामाक्षि स्मितमञ्जरी किरति ते कारुण्यधारारसम् ।
आश्चर्यं शिशिरीकरोति जगतीमालोक्य चैनामहो
कामं खेलति नीलकण्ठहृदयं कौतूहलान्दोलितम् ॥ २७ ॥
प्रेङ्खत्प्रौढकटाक्षकुञ्जकुहरेष्वत्यच्छगुच्छायितं
वक्त्रेन्दुच्छविसिन्धुवीचिनिचये फेनप्रतानायितम् ।
नैरन्तर्यविजृम्भितस्तनतटे नैचोलपट्टायितं
कल्माषं कवलीकरोतु मम ते कामाक्षि मन्दस्मितम् ॥ २८ ॥
पीयूषं तव मन्थरस्मितमिति व्यर्थैव सापप्रथा
कामाक्षि ध्रुवमीदृशं यदि भवेदेतत्कथं वा शिवे ।
मन्दारस्य कथालवं न सहते मथ्नाति मन्दाकिनी-
मिन्दुं निन्दति कीर्तिते च कलशीपाथोधिमीर्ष्यायते ॥ २९ ॥
विश्वेषां नयनोत्सवं वितनुतां विद्योततां चन्द्रमा
विख्यातो मदनान्तकेन मुकुटीमध्येन संमान्यताम् ।
आः किं जातमनेन हाससुषुमामालोक्य कामाक्षि ते
कालङ्कीमवलम्बते खलु दशां कल्मापहीनोऽप्यसौ ॥ ३० ॥
चेतः शीतलयन्तु नः पशुपतेरानन्दजीवातवो
नम्राणां नयनाध्वसीमसु चरच्चन्द्रातपोपक्रमाः ।
संसाराख्यसरोरुहाकरखेलीकारे तुषारोत्कराः
कामाक्षि स्मरकीर्तिबीजनिकरास्त्वन्मन्दहासाङ्कुराः ॥ ३१ ॥
कर्मौघाख्यतमःकचाकचिकरान्कामाक्षि संचिन्तये
त्वन्मन्दस्मितरोचिषां त्रिभुवनक्षेमंकरानङ्कुरान् ।
ये वक्त्रं शिशिरश्रियो विकसितं चन्द्रातपाम्भोरुह-
द्वेषोद्घोषणचातुरीमिव तिरस्कर्तुं परिष्कुर्वते ॥ ३२ ॥

---

१. 'ईर्ष्यायति' इति ग-पाठः. २. 'खिलीकारे' इति ग-पाठः.

कुर्युर्नः कुलशैलराजतनये कूलंकषं मङ्गलं
कुन्दस्पर्धनचुञ्चवस्तव शिवे मन्दस्मितप्रक्रमाः ।
ये कामाक्षि समस्तसाक्षिनयनं संतोपयन्त्यान्तरं
कर्पूरप्रकरा इव प्रसृमराः पुंसामसाधारणाः ॥ ३३ ॥

कम्रेण स्नपयस्व कर्मकुहनाचोरेण मारागम-
व्याख्याशिक्षणदीक्षितेन विदुपामक्षीणलक्ष्मीपुपा[1] ।
कामाक्षि स्मितकन्दलेन कलुषस्फोटक्रियाचुञ्चुना
कारुण्यामृतवीचिकाविहरणप्राचुर्यधुर्येण माम् ॥ ३४ ॥

त्वन्मन्दस्मितकन्दलस्य नियतं कामाक्षि शङ्कामहे
बिम्बः कश्चन नूतनः प्रचलितो नैशाकरः शीकरः ।
किं च क्षीरपयोनिधिः प्रतिनिधिः स्वर्वाहिनीवीचिका-
विब्बोकोऽपि विडम्ब एव कुहना मल्लीमतल्लीरुचः ॥ ३५ ॥

दुष्कर्मार्कनिसर्गकर्कशमहः संपर्कतप्तं मिल-
त्पङ्कं शंकरवल्लभे मम मनः काञ्चीपुरालंक्रिये ।
अम्ब त्वन्मृदुलस्मितामृतरसे मङ्क्त्वा विधूय व्यथा-
मानन्दोदयसौधशृङ्गपदवीमारोढुमाकाङ्क्षति ॥ ३६ ॥

नम्राणां नगराजशेखरसुते नाकालयानां पुरः
कामाक्षि त्वरया विपत्प्रशमने कारुण्यधाराः किरन् ।
आगच्छन्तमनुग्रहं प्रकटयन्नानन्दबीजानि ते
नासीरे मृदुहास एव तनुते नाथे सुधाशीतलः ॥ ३७ ॥

कामाक्षि प्रथमानविभ्रमनिधिः कंदर्पदर्पप्रसू-
र्मुग्धस्ते मृदुहास एव गिरिजे मुष्णातु मे किल्बिषम् ।
यं द्रष्टुं विहिते करग्रह उमे शंभुस्त्रपामीलितः
स्मेरं कारयति स्म ताण्डवविनोदानन्दिना तण्डुना[2] ॥ ३८ ॥

क्षुण्णं केनचिदेव धीरमनसा कुत्रापि नानाजनैः
कर्मग्रन्थिनियन्त्रितैरसुगमं कामाक्षि सामान्यतः ।

१. 'लक्ष्मीजुषा' इति ख-पाठः. २. तण्डु. शिवस्य कश्चिद्गण .

मुग्धैर्द्रष्टुमशक्यमेव मनसा मूढस्य मे चक्षुषो
मार्गं दर्शयतु प्रदीप इव ते मन्दस्मितश्रीरियम् ॥ ३९ ॥
ज्योत्स्नाकान्तिभिरेव निर्मलतरं नैशाकरं मण्डलं
हंसैरेव शरद्विकाससमये व्याकोचमम्भोरुहम्।
स्वच्छैरेव विकस्वरैरुडुगणैः कामाक्षि विम्बं दिवः
पुण्यैरेव मृदुस्मितैस्तव मुखं पुष्णाति शोभाभरम् ॥ ४० ॥
मानग्रन्थिविधुंतुदेन रभसादास्वाद्यमाने नव-
प्रेमाडम्बरपूर्णिमाहिमकरे कामाक्षि ते तत्क्षणम्।
आलोक्य स्मितचन्द्रिकां मुहुरिमामुन्मीलनं जग्मुषी
चेतः शीलयते चकोरचरितं चन्द्रार्धचूडामणेः ॥ ४१ ॥
कामाक्षि स्मितमञ्जरी तव भजे यस्यास्त्विषामङ्कुरा-
नापीनस्तनपानलालसतया निःशङ्कमङ्केशयः।
ऊर्ध्वं वीक्ष्य विकर्षति प्रसृमरानुद्दामया शुण्डया
सूनुस्ते विसशङ्कयाशु कुहना दन्तावलग्रामणीः ॥ ४२ ॥
गाढाश्लेपविमर्दसंभ्रमवशादुद्दामसुक्तागुण-
प्रालम्बे कुचकुम्भयोर्विगलिते दक्षाद्विपो वक्षसि।
या सख्येन पिनह्यति प्रचुरया भासा तदीयां दशां
सा मे खेलतु कामकोटि हृदये स्वच्छा[1] स्मितांशुच्छटा ॥ ४३ ॥
मन्दारे तव मन्थरस्मितरुचो मात्सर्यमालोक्यते
कामाक्षि स्मरशासने च नियतं रागोदयो लक्ष्यते।
चान्द्रीषु द्युतिमञ्जरीषु च महान्द्वेषाङ्कुरो[2] दृश्यते
शुद्धानां कथमीदृशी गिरिसुतेऽशुद्धा दशा कथ्यताम् ॥ ४४ ॥
पीयूषं खलु पीयते सुरजनैर्दुग्धाम्बुधिर्मथ्यते
माहेशैश्च जटाकलापनिगडैर्मन्दाकिनी नह्यते।

1. 'साधु स्मितांशु' इति ग-पाठः. 2. 'दोषाकरो दृश्यते' इति ग-पाठः.

शीतांशुः परिभूयते च तमसा तस्मादियं तादृशी
कामाक्षि स्मितमञ्जरी तव वचोवैदग्ध्यमुल्लङ्घते ॥ ४५ ।

आशङ्के तव मन्दहासलहरीमन्यादृशीं चन्द्रिका-
मेकाम्रेशकुटुम्बिनि प्रतिपदं यस्याः प्रभासंगमे ।
वक्षोजाम्बुरुहे न ते रहयतः कांचिद्दशां कौड्मली-
मास्याम्भोरुहमम्ब किं च शनकैरालम्बते फुल्लताम् ॥ ४

आस्तीर्णाधरकान्तिपल्लवचये पातं मुहुर्जग्मुषी
कामद्रोहिणि मांसलस्मरशरज्वालावलिं व्यञ्जती ।
निन्दन्ती घनसारहारवलयज्योत्स्नामृणालानि ते
कामाक्षि स्मितचातुरी विरहिणीरीतिं जगाहेतराम् ॥ ४

सूर्यालोकविधौ विकासमधिकं यान्ती हरन्ती तमः-
संदोहं नमतां निजस्मरणतो दोषाकरद्वेषिणी ।
निर्यान्ती वदनारविन्दकुहरान्निर्धूतजाड्या नृणां
श्रीकामाक्षि तव स्मितद्युतिमयी चित्रीयते चन्द्रिका ॥

कुण्ठीकुर्युरमी कुबोधघटनामस्मन्मनोमाथिनी
श्रीकामाक्षि शिवंकरास्तव शिवे श्रीमन्दहासाङ्कुराः ।
ये तन्वन्ति निरन्तरं तरुणिमस्तम्बेरमग्रामणी-
कुम्भद्वन्द्वविडम्बिनि स्तनतटे मुक्ताकुथाडम्बरम् ॥ ४९

प्रेङ्खन्तः शरदम्बुदा इव शनैः प्रेमानिलैः प्रेरिता
मज्जन्तो मदनारिकण्ठसुपमासिन्धौ मुहुर्मन्थरम् ।
श्रीकामाक्षि तव स्मितांशुनिकराः श्यामायमानश्रियो
नीलाम्भोधरनैपुणीं तत इतो निर्निद्रयन्त्यञ्जसा ॥ ५० ।

व्यापारं चतुराननैकविहृतौ व्याकुर्वती कुर्वती
रुद्राक्षग्रहणं करेण सततं वागूर्मिकल्लोलिता ।

---

१. 'तस्मादनेतादृशी' इति क-ख-पाठः २. 'वक्षोजाम्बुरुहो' इति ग-
३. 'दोषाङ्कर' इति क-पाठः. ४. 'मनोमन्थिनी' इति क-ख-पाठ .

उत्फुल्लं धवलारविन्दमधरीकृत्य स्फुरन्ती सदा
श्रीकामाक्षि सरस्वती विजयते त्वन्मन्दहासप्रभा ॥ ९१ ॥
कर्पूरद्युतितस्करेण महसा कल्माषयत्याननं
श्रीकाञ्चीपुरनायिके पतिरिव श्रीमन्दहासोऽपि ते ।
आलिङ्गत्यतिपीवरां स्तनतटीं बिम्बाधरं चुम्बति
प्रौढं रागभरं व्यनक्ति मनसो धैर्यं धुनीतेतराम् ॥ ९२ ॥
वैशद्येन च विश्वतापहरणक्रीडापटीयस्तया
पाण्डित्येन पचेलिमेन जगतां नेत्रोत्सवोत्पादने ।
कामाक्षि स्मितकन्दलैस्तव तुलामारोढुमुद्योगिनी
ज्योत्स्नासौ जलराशिपोषणतया दूष्यां प्रपन्ना दशाम् ॥९३॥
लावण्याम्बुजिनीमृणालवलयैः शृङ्गारगर्जद्द्विप-
ग्रामण्यः श्रुतिचामरैस्तरुणिमस्वाराज्यबीजाङ्कुरैः ।
आनन्दामृतसिन्धुवीचिपृषतैरास्याब्जहंसैस्तव
श्रीकामाक्षि मथान मन्दहसितैर्मत्कं मनःकल्मषम् ॥ ९४ ॥
उत्तुङ्गस्तनमण्डलीपरिचलन्माणिक्यहारच्छटा-
चञ्चच्छोणिमपुञ्जमध्यसरणिं मातः परिष्कुर्वती ।
या वैदग्ध्यमुपैति शंकरजटाकान्तारवाटीपत-
त्स्वर्वापीपयसः स्मितद्युतिरसौ कामाक्षि ते मञ्जुला ॥ ९५ ॥
सन्नामैकजुषा जनेन सुलभं संसूचयन्ती शनै-
रुत्तुङ्गस्य चिरादनुग्रहतरोरुत्पत्स्यमानं फलम् ।
प्राथम्येन विकस्वरा कुसुमवत्प्रागल्भ्यमभ्येयुषी
कामाक्षि स्मितचातुरी तव मम क्षेमंकरी कल्पताम् ॥ ९६ ॥
धानुष्काग्रसरस्य लोलकुटिलभ्रूलेखया बिभ्रतो
लीलालोकशिलीमुखं नववयःसाम्राज्यलक्ष्मीपुषः ।
जेतुं मन्मथमर्दनं जननि ते मन्दस्मितप्रक्रमो
वल्गुर्विभ्रमभूभृतो वितनुते सेनापतिप्रक्रियाम् ॥ ९७ ॥

---

१. 'पयसा' इति ग-पाठः.

यन्नाकम्पत कालकूटकवलीकारे चुचुम्बे न यद्-
ग्लान्या चक्षुषि रूपितानलशिखे रुद्रस्य तत्तादृशम् ।
चेतो यत्प्रसभं स्मरज्वरशिखिज्वालेन लेलिह्यते
तत्कामाक्षि तव स्मितांशुकणिकाहेलाभवं प्राभवम् ॥ ५८ ॥

संभिन्नेव सुपर्वलोकतटिनी वीचीचयैर्यामुनैः
संमिश्रेव शशाङ्कदीप्तिलहरी नीलैर्महानीरदैः ।
कामाक्षि स्फुरिता तव स्मितरुचिः कालाञ्जनस्पर्धिना
कालिम्ना कचरोचिषां व्यतिकरे कांचिद्दशामश्नुते ॥ ५९ ॥

जानीमो जगदीश्वरि प्रणमतां त्वन्मन्दहासप्रभां
श्रीकामाक्षि कुमुद्वतीमभिनवामेषा यतः सर्वदा ।
आस्येन्दोरवलोकने पशुपतेरभ्येति संफुल्लतां
तन्द्रालुस्तदभाव एव तनुते तद्वैपरीत्यक्रमम् ॥ ६० ॥

यान्ती लोहितिमानमभ्रतटिनी धातुच्छटाकर्दमै-
र्भान्ती बालगभस्तिमालिकिरणैर्मेघावली शारदी ।
बिम्बोष्ठद्युतिपुञ्जचुम्बनकला शोणायमानेन ते
कामाक्षि स्मितरोचिषा समदशामारोढुमाकाङ्क्षति ॥ ६१ ॥

श्रीकामाक्षि मुखेन्दुभूषणमिदं मन्दस्मितं तावकं
नेत्रानन्दकरं तथा हिमकरो गच्छेद्यथा तिग्मताम् ।
शीतं देवि तथा यथा हिमजलं संतापमुद्रास्पदं
श्वेतं किं च तथा यथा मलिनतां धत्ते च मुक्तामणिः ॥६२॥

त्वन्मन्दस्मितमञ्जरीं प्रसृमरां कामाक्षि चन्द्रातपं
सन्तः संततमामनन्त्यमलता तल्लक्षणं लक्ष्यते ।
येनासौ विधुनोति तापमधिकं नाभ्यन्तरं मानस-
ध्वान्तं तत्खलु दुःखिनो वयममी केनेति जानीमहे ॥ ६३ ॥

१. 'प्रभवस्थिरज्वरशिखिज्वालेन' इति ग-पाठः. २. 'स्मितदीधिति स्मरदशा' इति ग-पाठः.

नम्रस्य प्रणयप्ररोहकलहच्छेदाय पादाब्जयो-
र्मन्दं चन्द्रकिशोरशेखरमणेः कामाक्षि रागेण ते।
बन्धूकप्रसवश्रियं जितवतो वंहीयसीं तां रुचिं
बिम्बोष्ठस्य रुचिर्निरस्य हसितज्योत्स्ना वयस्यायते ॥ ६४ ॥

मुक्तानां परिमोचनं विदधतस्तत्प्रीतिनिष्पादिनी
भूयो दूरत एव धूतमनसस्तत्पालनं तन्वती।
उद्भूतस्य जलान्तरादविरतं तद्दूरतां जग्मुषी
कामाक्षि स्मितमञ्जरी तव कथं कम्बोस्तुलामश्नुते ॥ ६५ ॥

श्रीकामाक्षि तव स्मितद्युतिझरीवैदग्ध्यलीलायितं
पश्यन्तोऽपि निरन्तरं सुविमलं मान्या जगन्मण्डले।
लोकं हासयितुं किमर्थमनिशं प्राकाश्यमातन्वते
मन्दाक्षं विरमस्तु वस्तुविभवो मन्दारचन्द्रादयः ॥ ६६ ॥

क्षीराब्धेरपि शैलराजतनये त्वन्मन्दहासस्य च
श्रीकामाक्षि वलक्षिमोदयनिधेः किंचिद्भिदां ब्रूमहे।
एकस्मै पुरुषाय देवि स ददौ लक्ष्मीं कदाचित्पुरा
सर्वेभ्योऽपि ददात्यसौ तु सततं लक्ष्मीं च वागीश्वरीम् ॥ ६७ ॥

श्रीकाञ्चीपुररत्नदीपकलिके नान्यानि विश्वान्तरे
चाकोराणि चराचरेश्वरि परं धन्यानि मन्यामहे।
कम्पातीरकुटुम्बचङ्क्रमकलाचुञ्चूनि चञ्चूपुटै-
र्नित्यं यानि तव स्मितेन्दुमहसामास्वादमातन्वते ॥ ६८ ॥

शैत्यप्रक्रममाश्रितोऽपि नमतां जाड्यप्रथां धूनय-
न्नागव्यञ्जनपेशलोऽपि गिरिजे वैमल्यमुल्लासयन्।
लीलालापपुरःसरोऽपि सततं वाचंयमान्प्रीणय-
न्कामाक्षि स्मितरोचिषां तव समुल्लासः कथं वर्ण्यते ॥ ६९ ॥

---

१. 'बहीयसीं' इति क-ख-पाठः. २. 'विरहय्य' इति क-ख-पाठः. ३. 'तान्येव' इति क-ख-पाठः.

श्रोणीचञ्चलमेखलामुखरितं लीलागतं मन्थरं
भ्रूवल्लीचलनं कटाक्षवलनं मन्दाक्षवीक्षाचणम् ।
यद्वैदग्ध्यमुखेन मन्मथरिपुं संमोहयत्यञ्जसा
श्रीकामाक्षि तव स्मिताय सततं तस्मै नमस्कुर्महे ॥ ७० ॥

श्रीकामाक्षि मनोज्ञमन्दहसितज्योतिष्प्ररोहे तव
स्फीतश्वेतिमसार्वभौमसरणिप्रागल्भ्यमभ्येयुषि ।
चन्द्रोऽयं युवराजतां कलयते चेटीधुरं चन्द्रिका
गङ्गा सा च सुधाझरी सहचरीसाधर्म्यमालम्बते ॥ ७१ ॥

ज्योत्स्ना किं तनुते फलं तनुमतामौष्ण्यप्रशान्तिं विना
त्वन्मदस्मितरोचिषा तनुमतां कामाक्षि रोचिष्णुना ।
संतापोऽपि निवार्यते नववचःप्राचुर्यमङ्कूर्यते
सौन्दर्यं परिपूर्यते जगति सा कीर्तिश्च संचार्यते ॥ ७२ ॥

वैमल्यं कुमुदश्रियां हिमरुचः कान्त्यैव संधुक्षते[1]
ज्योत्स्नारोचिरपि प्रदोपसमयं प्राप्यैव संपद्यते[2] ।
स्वच्छत्वं नवमौक्तिकस्य परमं संस्कारतो दृश्यते
कामाक्ष्याः स्मितदीधितेर्विशदिमा नैसर्गिको भासते ॥ ७३ ॥

प्राकाश्यं परमेश्वरप्रणयिनि त्वन्मन्दहासश्रियः
श्रीकामाक्षि मम क्षिणोतु ममतावैचक्षणीमक्षयाम् ।
यद्भीत्येव निलीयते[3] हिमकरो मेघोदरे शुक्तिका-
गर्भे मौक्तिकमण्डली च सरसो मध्ये मृणाली च सा ॥ ७४ ॥

हेरम्बे च गुहे च हर्षभरितं वात्सल्यमङ्कूरय-
न्मारद्रोहिणि पूरुषे सहभुवं प्रेमाङ्कुरं व्यञ्जयन् ।
आनम्रेषु जनेषु पूर्णकरुणावैदग्ध्यमुत्तालय-
न्कामाक्षि स्मितमज्जरी(?) तव कथकारं मया कथ्यते ॥ ७५ ॥

---

१. 'संधुक्ष्यते' इति ग-पाठः. २. 'सपाद्यते' इति सर्वेषु पुस्तकेषु पाठ . ३ 'विलीयते' इति ग-पाठः.

संक्रुद्धद्विजराजकोऽप्यविरतं कुर्वन्द्विजैः संगमं
वाणीपद्धतिदूरतोऽपि सततं तत्साहचर्यं वहन् ।
अश्रान्तं पशुदुर्लभोऽपि कलयन्पत्यौ पशूनां रतिं
श्रीकामाक्षि तव स्मितामृतरसस्यन्दो मयि स्यन्दताम् ॥ ७६ ॥
श्रीकामाक्षि महेश्वरे निरुपमप्रेमाङ्कुरप्रक्रमं
नित्यं यः प्रकटीकरोति सहजामुन्निद्रयन्माधुरीम् ।
तत्तादृक्तव मन्दहाससुषमा मातः कथं मानितां
तन्मूर्ध्नि सुरनिम्नगां च कलिकामिन्दोश्च तां निन्दति ॥ ७७ ॥
ये माधुर्यविहारमण्डपभुवो ये शैत्यमुद्राकरा
ये वैशद्यदशाविशेषसुभगास्ते मन्दहासाङ्कुराः ।
कामाक्ष्याः सहजं गुणत्रयमिदं पर्यायतः कुर्वतां
वाणीगुम्फनडम्बरे च हृदये कीर्तिप्ररोहे च मे ॥ ७८ ॥
कामाक्ष्या मृदुलस्मितांशुनिकरा दक्षान्तके[1] वीक्षणे
मन्दाक्षग्रहिला हिमद्युतिमयूखाक्षेपदीक्षाङ्कुराः ।
दाक्ष्यं पक्ष्मलयन्तु माक्षिकगुडद्राक्षाभवं[2] वाक्षु[3] मे
सूक्ष्मं मोक्षपथं निरीक्षितुमपि प्रक्षालयेयुर्मनः ॥ ७९ ॥
जात्या शीतलशीतलानि मधुराण्येतानि पूतानि ते
गाङ्गानीव पयांसि देवि पटलान्यल्पस्मितज्योतिषाम् ।
एनःपङ्कपरम्परामलिनतामेकाम्रनाथप्रिये
प्रज्ञानात्सुतरां मदीयधिषणां प्रक्षालयन्तु क्षणात् ॥ ८० ॥
अश्रान्तं परतन्त्रितः पशुपतिस्त्वन्मदहासाङ्कुरैः
श्रीकामाक्षि तदीयवर्णसमतासङ्गेन शङ्कामहे ।
इन्दुं नाकधुनीं च शेखरयते मालां च धत्ते नवै-
र्वैकुण्ठैरवगुण्ठनं च कुरुते धूलीचयैर्भास्मनैः ॥ ८१ ॥
श्रीकाञ्चीपुरदेवते मृदुवचःसौरभ्यमुद्रास्पदं
प्रौढप्रेमलतानवीनकुसुमं मन्दस्मितं तावकम् ।

१. दक्षान्तकः शिवस्तत्सम्बन्धिनि. २. 'गुण' इति क-ख-पाठः ३. वाणीषु.

मन्दं कन्दलति प्रियस्य वदनालोके समाभाषणे
श्लक्ष्णे कुड्मलति प्ररूढपुलके चाश्लेषणे फुल्लति ॥ ८२ ॥
किं त्रैःस्रोतसमम्बिके परिणतं स्रोतश्चतुर्थं नवं
पीयूषस्य समस्ततापहरणं किं वा द्वितीयं वपुः ।
किंस्विन्नैकटिकं गिरो मधुरिमाभ्यासाय नव्यं पयः
श्रीकाञ्चीपुरनायकप्रियतमे मन्दस्मितं तावकम् ॥ ८३ ॥
भूषा वक्त्रसरोरुहस्य सहजा वाचां सखी शाश्वती
नीवी[1] विभ्रमसंततेः पशुपतेः सौधी दृशां पारणा ।
जीवातुर्मदनश्रियः शशिरुचेरुच्चाटनी देवता
श्रीकामाक्षि गिरामभूमिमयते हासप्रभामञ्जरी ॥ ८४ ॥
सूतिः श्वेतिमकन्दलस्य वसतिः शृङ्गारसारश्रियः
पूर्तिः सूक्तिझरीरसस्य लहरी कारुण्यपाथोनिधेः ।
वाटी काचन कौसुमी मधुरिमस्वाराज्यलक्ष्म्यास्तव
श्रीकामाक्षि ममास्तु मङ्गलकरी हासप्रभाचातुरी ॥ ८५ ॥
उत्तुङ्गस्तनमण्डलस्य विलसल्लावण्यलीलानटी-
रङ्गस्य स्फुटमूर्ध्वसीमनि[2] मुहुः प्राकाश्यमभ्येयुषी ।
श्रीकामाक्षि तव स्मितद्युतितितिर्बिम्बोष्ठकान्त्यङ्कुरै-
श्चित्रां विद्रुममुद्रिकां वितनुते मौक्तीं[3] वितानश्रियम् ॥ ८६ ॥
जन्तूनां जनिदुःखमृत्युलहरीसंतापनं कृन्ततः
प्रौढानुग्रहपूर्णशीतलरुचो नित्योदयं बिभ्रतः ।
श्रीकामाक्षि विसृत्वरा इव करा हासाङ्कुरास्ते हठा-
दालोकेन निर्हन्युरन्धतमसस्तोमस्य मे संततिम्[4][5] ॥ ८७ ॥
स्वाभाव्यात्तव वक्त्रमेव ललितं संतोषसंपादनं
शंभोः किं पुनरञ्चितस्मितरुचः पाण्डित्यपात्रीकृतम् ।

---

१. नीवी मूलधनम्. २. 'मूर्ध्वसीम्नि च' इति क-ख-पाठः. ३. 'मुक्तावितान-श्रियम्' इति क-पाठः. ४. 'निहन्तु' इति ग-पाठः. ५. 'सततम्' इति ग-पाठः.

अम्भोजं स्वत एव सर्वजगतां चक्षुःप्रियंभावुकं
कामाक्षि स्फुरिते शरद्विकसिते कीदृग्विधं भ्राजते ॥ ८८ ॥

पुंभिर्निर्मलमानसैर्विदधते मैत्रीरसं निर्मलं
कर्तुं कर्मलयं च निर्मलतमां कीर्तिं लभन्तेतराम् ।
सूक्तिं पक्ष्मलयन्ति निर्मलगुणां यत्तावकाः सेवका-
स्तत्कामाक्षि तव स्मितस्य कलया नैर्मल्यसीमानिधेः ॥ ८९ ॥

आकर्षन्नयनानि नाकिसदसां शैत्येन संस्तम्भय-
न्निन्दुं किं च विमोहयन्पशुपतिं विश्वार्तिमुच्चाटयन् ।
हिंसन्संसृतिडम्बरं तव शिवे हासाह्वयो मान्त्रिकः
श्रीकामाक्षि मदार्तितापतमसो विद्वेषणे चेष्टताम् ॥ ९० ॥

क्षेपीयः क्षपयन्तु कल्मषभयान्यस्माकमल्पस्मित-
ज्योतिर्मण्डलचङ्क्रमास्तव शिवे कामाक्षि रोचिष्णवः ।
पीडाकर्मठकर्मधर्मसमयव्यापारतापानल-
श्रीपाता नवहर्षवर्षणसुधास्रोतस्विनीशीकराः ॥ ९१ ॥

श्रीकामाक्षि तव स्मितैन्दवमहःपूरे परिस्फूर्जति
प्रौढ्यं वारिधिचातुरीं कलयते भक्तात्मनां प्रातिभम् ।
दौर्गत्यप्रसरास्तमःपटलिकासाधर्म्यमाबिभ्रते
किं किं कैरवसाहचर्यपदवीरीत्यां न धत्ते पदम् ॥ ९२ ॥

मन्दारादिषु मन्मथारिमहिषि प्राकाश्यरीतिं निजां
कादाचित्कतया विशङ्क्य बहुशो वैशद्यमुद्रागुणः ।
श्रीकामाक्षि तदीयसंगमकलामन्दीभवत्कौतुकः
सातत्येन तव स्मिते वितनुते स्वैरासनावासनाम् ॥ ९३ ॥

इन्धाने भववीतिहोत्रनिवहे कर्मौघचण्डानिल-
प्रौढिम्ना बहुलीकृते निपतितं संतापचिन्ताकुलम् ।

---

१. 'प्रौढिं' इति ग-पाठः. २. 'हासचर्यपदवीं' इति ग-पाठः.

मातर्मां परिपिञ्च किंचिदमलैः पीयूषवर्षैरिव
श्रीकामाक्षि तव स्मितद्युतिकणैः शैशिर्यलीलाकरैः ॥ ९४ ॥

भाषाया रसनाग्रखेलनजुषः शृङ्गारमुद्रासखी
लीलाजातरतेः सुखेन नियमस्नानाय मेनात्मजे।
श्रीकामाक्षि सुधामयीव शिशिरा स्रोतस्विनी तावकी
गाढानन्दतरङ्गिता विजयते हासप्रभाचातुरी ॥ ९५ ॥

संतापं विरलीकरोतु सकलं कामाक्षि मच्चेतना
मज्जन्ती मधुरस्मितामरधुनीकल्लोलजालेषु ते।
नैरन्तर्यमुपेत्य मन्मथमरुल्लोलेषु येषु स्फुटं
प्रेमेन्दुः प्रतिबिम्बितो वितनुते कौतूहलं धूर्जटेः ॥ ९६ ॥

चेतःक्षीरपयोधिमन्थनचलद्रागाख्यमन्थाचल-
क्षोभव्यापृतिसंभवां जननि ते मन्दस्मितश्रीसुधाम्।
स्वादं स्वादमुदीतकौतुकरसं नेत्रत्रयी शांकरी
श्रीकामाक्षि निरन्तरं परिणमत्यानन्दवीचीमयी ॥ ९७ ॥

आलोके तव पञ्चसायकरिपोरुद्दामकौतूहल-
प्रेङ्खन्मारुतघट्टनप्रचलितादानन्ददुग्धाम्बुधेः।
काचिद्वीचिरुदञ्चति प्रतिनवा संवित्प्ररोहात्मका
तां कामाक्षि कवीश्वराः स्मितमिति व्याकुर्वते सर्वदा ॥ ९८ ॥

सूक्तिः शीलयते किमद्रितनये मन्दस्मितात्ते मुहु-
र्माधुर्यागमसंप्रदायमथवा सूक्तेस्तु मन्दस्मितम्।
इत्थं कामपि गाहते मम मनः संदेहमार्गभ्रमी
श्रीकामाक्षि न पारमार्थ्यसरणिस्फूर्तौ निधत्ते पदम् ॥ ९९ ॥

क्रीडालोलकृपासरोरुहमुखीसौधाङ्गणेभ्यः कवि-
श्रेणीवाक्परिपाटिकामृतझरी सूतीगृहेभ्यः शिवे।

---

१. 'दैशीयलीलाकणै.' इति ग पाठ· २. 'रसनाग्रलेखन' इति ग पाठ.. ३. 'म-ल्लोलेषु' इति क-ख-पाठः. ४ 'क्षोभात्सप्रतिसभवा' इति क-ख-पाठ..

निर्वाणाङ्कुरसार्वभौमपदवीसिंहासनेभ्यस्तव
श्रीकामाक्षि मनोज्ञमन्दहसितज्योतिष्कणेभ्यो नमः ॥ १०० ॥

इति श्रीमूककविसार्वभौमकृतौ पञ्चशत्यां मन्दस्मितशतकं द्वितीयम् ।

---

पादारविन्दशतकम् ।

महिम्नः पन्थानं [1]मदनपरिपन्थिप्रणयिनि
प्रभुर्निर्णेतुं ते भवति यतमानोऽपि कतमः ।
तथापि श्रीकाञ्चीविहृतिरसिके कोऽपि मनसो
विपाकस्त्वत्पादस्तुतिविधिषु [2]जल्पाकयति माम् ॥ १ ॥

[3]गलग्राही [4]पौरंदरपुरवनीपल्लवरुचां
[5]धृतप्राथम्यानामरुणमहसामादिमगुरुः ।
[6]समिन्धे बन्धूकस्तवकसहयुध्वा दिशि दिशि
प्रसर्पन्कामाक्ष्याश्चरणकिरणानामरुणिमा ॥ २ ॥

मरालीनां यानाभ्यसनकलनामूलगुरवे
दरिद्राणां त्राणव्यतिकरसुरोद्यानतरवे ।
तमस्काण्डप्रौढिप्रकटनतिरस्कारपटवे
जनोऽयं कामाक्ष्याश्चरणनलिनाय स्पृहयते ॥ ३ ॥

वहन्ती सैन्दूरीं सरणिमवनम्रामरपुरी-
पुरंध्रीसीमन्ते कविकमलबालार्कसुषमा ।
त्रयीसीमन्तिन्याः स्तनतटनिचोलारुणपटी
विभान्ती कामाक्ष्याः पदनलिनकान्तिर्विजयते ॥ ४ ॥

प्रणम्रीभूतस्य प्रणयकलहत्रस्तमनसः
[7]स्मरारातेश्चूडावियति गृहमेधी हिमकरः ।
ययोः सांध्यां कान्तिं वहति सुषमाभिश्चरणयो-
स्तयोर्मे कामाक्ष्या हृदयमपतन्द्रं विहरताम् ॥ ५ ॥

---

१. हे कामारिदयिते. २. वाचालयति. मुखरीकरोतीत्यर्थः. ३. तिरस्कारकः. ४. नन्दनवनतरुकिसलयानाम्. ५. तरुणरविकिरणानाम्. ६. देदीप्यते. ७. 'पुरारातेः' इति ग-पाठः.

ययोः पीठायन्ते विबुधमुकुटीनां पटलिका
ययोः सौधायन्ते स्वयमुदयभाजो भणितयः ।
ययोर्दासायन्ते सरसिजभवाद्याश्चरणयो-
स्तयोर्मे कामाक्ष्या दिनमनु वरीवर्तु हृदयम् ॥ ६ ॥

नयन्ती संकोचं सरसिजरुचं दिक्परिसरे
सृजन्ती लौहित्यं नखकिरणचन्द्रार्धखचिता ।
कवीन्द्राणां हृत्कैरवविकसनोद्योगजननी
स्फुरन्ती कामाक्ष्याश्चरणरुचिसंध्या विजयते ॥ ७ ॥

विरावैर्माञ्जीरैः किमपि कथयन्तीव मधुरं
पुरस्तादानम्रे पुरविजयिनि स्मेरवदने ।
वयस्येव प्रौढा शिथिलयति या प्रेमकलह-
प्ररोहं कामाक्ष्याश्चरणयुगली सा विजयते ॥ ८ ॥

सुपर्वस्त्रीलोलालकपरिचितं षट्पदकुलैः
स्फुरल्लाक्षारागं तरुणतरणिज्योतिररुणैः ।
भृतं कान्त्यम्भोभिर्विसृमरमरन्दैः सरसिजै-
र्विधत्ते कामाक्ष्याश्चरणयुगलं बन्धुपदवीम् ॥ ९ ॥

रजःसंसर्गेऽपि स्थितमजरसामेव हृदये
परं रक्तत्वेन स्थितमपि विरक्तैकशरणम् ।
अलभ्यं मन्दानां दधदपि सदा मन्दगतितां
विधत्ते कामाक्ष्याश्चरणयुगमाश्चर्यलहरीम् ॥ १० ॥

जटाला मञ्जीरस्फुरदरुणरत्नांशुनिकरै-
र्निषीदन्ती मध्ये नखरुचिझरीगाङ्गपयसाम् ।
परित्राणं कर्तुं जननि मम कामाक्षि नियतं
तपश्चर्यां धत्ते तव चरणपाथोजयुगली ॥ ११ ॥

तुलाकोटिद्वन्द्वक्वणितभणिताभीतिवचसो-
र्विनम्रं कामाक्ष्या विसृमरमहःपाटलितयोः ।

क्षणं विन्यासेन क्षपिततमसोर्मे ललितयोः
पुनीयान्मूर्धानं पुरहरपुरंध्रीचरणयोः ॥ १२ ॥

भवानि द्रुह्येतां भवनिबिडितेभ्यो मम मुहु-
स्तमोव्यामोहेभ्यस्तव जननि कामाक्षि चरणौ।
ययोर्लाक्षाबिन्दुस्फुरणदशया धूर्जटिजटा-
कुटीरा शोणाङ्कं वहति वपुरेणाङ्ककलिका ॥ १३ ॥

पवित्रीकुर्युर्नः पदतलभुवः पाटलरुचः
परागास्ते पापप्रशमनधुरीणास्तव शिवे।
कणं लब्धुं येषां निजशिरसि कामाक्षि नियतं
वलन्तो व्यातन्वन्त्यहमहमिकां वासवमुखाः ॥ १४ ॥

बलाकामालाभिर्नखरुचिमयीभिः परिवृते
विनम्रस्वर्नारीविकचकचकालाम्बुदकुले।
स्फुरन्तः कामाक्षि स्फुटदलितबन्धूकसुहृद-
स्तडिल्लेखायन्ते तव चरणपाथोजकिरणाः ॥ १५ ॥

सरागः सद्वेषः प्रसृमररजस्कः प्रतिदिनं
निसर्गादाक्रामन्विबुधजनमूर्धानमधिकम्।
कथंकारं मातः कथय पदपद्मस्तव सतां
नतानां कामाक्षि प्रकटयति कैवल्यसरणिम् ॥ १६ ॥

जपालक्ष्मीशोणो जननि परमज्ञाननलिनी-
विकासव्यासङ्गो विफलितजगज्जाड्यगरिमा।
मनःपूर्वाद्रिं नस्तिलकयतु कामाक्षि तरसा
तमस्काण्डद्रोही तव चरणपाथोजरमणः[1] ॥ १७ ॥

नमस्कुर्मः प्रेङ्खन्मणिकटकनीलोपलमहः-
पयोधौ रिङ्खद्भिर्नखकिरणफेनैर्धवलिते।
स्फुटं कुर्वाणाय प्रबलचलदौर्वानलशिखा-
वितर्कं कामाक्ष्याः सततमरुणिम्ने चरणयोः ॥ १८ ॥

---

१. चरणरूपसूर्यः.

शिवे पाशायेतामलघुनि तमःकूपकुहरे
दिनाधीशायेतां मम हृदयपाथोजविपिने ।
नभोमासायेतां सरसकवितारीतिसरिति
त्वदीयौ कामाक्षि प्रसृतकिरणौ देवि चरणौ ॥ १९ ॥

निषक्तं[1] श्रुत्यन्ते नयनमिव सद्वृत्तरुचिरैः
समैर्जुष्टं शुद्धैरधरमिव रम्यैर्द्विजगणैः ।
शिवे वक्षोजन्मद्वितयमिव मुक्ताश्रितमुमे
त्वदीयं कामाक्षि प्रणतशरणं नौमि चरणम् ॥ २० ॥

नमस्यासंसज्जन्[2]नमुचिपरिपन्थिप्रणयिनी-
निसर्गप्रेङ्खोलत्कुरल[3]कुलकालाहिशबले ।
नखच्छायादुग्धोदधिपयसि ते वैद्रुमरुचां
प्रचारं कामाक्षि प्रकटयति पादाब्जसुषमा ॥ २१ ॥

कदा दूरीकर्तुं कटुदुरितकाकोलजनितं
महान्तं संतापं मदनपरिपन्थिप्रियतमे ।
क्षणात्ते[4] कामाक्षि त्रिभुवनपरीतापहरणे
पटीयांसं लप्स्ये पदकमलसेवामृतरसम् ॥ २२ ॥

ययोः सांध्यं रोचिः सततमरुणिम्ने स्पृहयते
ययोश्चान्द्री कान्तिः परितपति दृष्ट्वा नखरुचिम् ।
ययोः पाकोद्रेकं पिपठिषति भक्त्या किसलयं
म्रदिम्नः कामाक्ष्या मनसि चरणौ तौ तनुमहे ॥ २३ ॥

जगन्नेदं नेदं परमिति परित्यज्य यतिभिः
कुशाग्रीयस्वान्तैः कुशलधिषणैः शास्त्रसरणौ ।
गवेष्यं कामाक्षि ध्रुवमकृतकानां गिरिसुते
गिरामैदंपर्यं तव चरणमाहात्म्यगरिमा ॥ २४ ॥

---

१. 'निषिक्त' इति क-ख-पाठः. २. शची. ३. केशकलाप.. ४. 'क्षण ते
क-ख-पाठः.

कृतस्नानं शास्त्रामृतसरसि कामाक्षि नितरां
दधानं वैशद्यं कलितरसमानन्दसुधया ।
अलंकारं भूमेर्मुनिजनमनश्चिन्मयमहा-
पयोधेरन्तःस्थं तव चरणरत्नं विजयते ॥ २५ ॥

मनोगेहे मोहोद्भवतिमिरपूर्णे मम मुहु-
र्दरिद्राणीकुर्वन्दिनकरसहस्राणि किरणैः ।
विधत्तां कामाक्षि प्रसृमरतमोवञ्चनचणः
क्षणार्धं सांनिध्यं चरणमणिदीपो जननि ते ॥ २६ ॥

कवीनां चेतोवन्न[1]खररुचिसंपर्कि विबुध-
स्रवन्तीस्रोतोवत्पटुमुखरितं हंसक[2]रवैः ।
दिनारम्भश्रीवन्नियतमरुणच्छायसुभगं
मदन्तः कामाक्ष्याः स्फुरतु पदपङ्केरुहयुगम् ॥ २७ ॥

सदा किं संपर्क[3] प्रकृतिकठिनैर्नाकिमुकुटै-
स्तटैर्नीहाराद्रेरधिकमणुना योगिमनसा ।
[4]विभिन्ते संमोहं शिशिरयति भक्तानपि दृशा-
मदृश्यं कामाक्षि प्रकटयति ते [5]पादयुगलम् ॥ २८ ॥

पवित्राभ्यामम्ब प्रकृतिमृदुलाभ्यां तव शिवे
पदाभ्यां कामाक्षि प्रसभमभिभूतैः सचकितैः ।
प्रवालैरम्भोजैरपि च वनवासव्रतदशाः
सदैवारभ्यन्ते परिचरितनानाद्विजगणैः ॥ २९ ॥

मरालीनां पादाहतिमदनिशं हंसनिवहै-
र्नमस्यं निर्जाड्यं नियतजलमध्यैकशरणम् ।
अदोषव्यासङ्गं सततमपि दोषाप्तिमलिनं
पयोजं कामाक्ष्याः परिहसति पादाब्जयुगलम् ॥ ३० ॥

---

१. नखा एव नखरास्तत्कान्तियुक्तम्; (पक्षे) न खररुचिसंपर्कि. २. हंसकः पादकटकः; (पक्षे) हंसा एव हंसकाः. ३. 'संपर्कात्' इति सर्वपुस्तकपाठः. ४. 'विभङ्क्ते' इति ग-पाठः; 'विभन्ते' इति क-ख-पाठः. ५. 'पादयुगली' इति ग-पाठः.

सुराणामानन्दप्रबलनतया मण्डनतया[1]
नखेन्दुज्योत्स्नाभिर्विसृमरतमःखण्डनतया।
पयोजश्रीद्वेषव्रतरततया त्वच्चरणयो-
र्विलासः कामाक्षि प्रकटयति नैशाकरदशाम् ॥३१॥

सितिम्ना कान्तीनां नखरजनुषां पादनलिन-
च्छवीनां शोणिम्ना तव जननि कामाक्षि नमने।
लभन्ते मन्दारग्रथितनवबन्धूककुसुम-
स्रजां सामीचीन्यं सुरपुरपुरंध्रीकचभराः ॥ ३२ ॥

नखश्रीसंनद्धस्तवकनिचितः स्वैश्च किरणैः
पिशङ्गैः कामाक्षि प्रकटितलसत्पल्लवरुचिः।
सतां गम्यः शङ्के सकलफलदाता सुरतरु-
स्त्वदीयः पादोऽयं तुहिनगिरिराजन्यतनये ॥ ३३ ॥

स्फुरन्मध्ये शुद्धे नखकिरणदुग्धाब्धिपयसां
वहन्नब्जं चक्रं दरमपि च लेखात्मकतया[2]।
श्रितो मात्स्यं रूपं श्रियमपि दधानो निरुपमां
त्रिधामा[3] कामाक्ष्याः पदनलिननामा विजयते ॥ ३४ ॥

वषट्कुर्वन्माञ्जीरजकलकलैः कर्मलहरी-
हवींषि प्रोद्दण्डं ज्वलति परमज्ञानदहने।
महीयान्कामाक्षि स्फुटमहसि जोहोति सुधियां
मनोवेद्यां मातस्तव चरणयज्वा मम सदा ॥ ३५ ॥

महामन्त्रं काञ्चीमणिकटकनादैरिव जय-
न्क्षिपन्दिक्षु स्वच्छं नखरुचिमयं भास्मनरजः।
नतानां कामाक्षि प्रकृतिपटुरुच्चाट्य ममता-
पिशाचीं पादोऽयं प्रकटयति ते मान्त्रिकदशाम् ॥३६॥

---

१. 'मण्डिततया' इति ग-पाठः. २. 'रेखात्मक' इति ग-पाठ.. ३. विष्णु.

उदीते बोधेन्दौ तमसि नितरां जग्मुषि दशां
दरिद्रां कामाक्षि प्रकटमनुरागं विदधती[1]।
सितेनाच्छाद्याङ्गं नखरुचिपटेनाङ्घ्रियुगली-
पुरंध्री ते मातः स्वयमभिसरत्येव[2] हृदयम् ॥ ३७ ॥

दिनारम्भः सम्पन्नलिनविपिनानामभिनवो
विकासो वासन्तः सुकविपिकलोकस्य नियतम्।
प्रदोषः कामाक्षि प्रकटपरमज्ञानशशिन-
श्चकास्ति त्वत्पादस्मरणमहिमा शैलतनये ॥ ३८ ॥

धृतच्छायं नित्यं सरसिरुहमैत्रीपरिचितं[3]
निधानं दीप्तीनां निखिलजगतां बोधजनकम्।
मुमुक्षूणां मार्गप्रथनपटु कामाक्षि पदवीं
पदं ते पातङ्गीं परिकलयते पर्वतसुते ॥ ३९ ॥

शनैस्तीर्त्वा मोहाम्बुधिमथ समारोढुमनसः[4]
क्रमात्कैवल्याख्यां सुकृतिसुलभां[5] सौधवलभीम्।
लभन्ते निःश्रेणीमिव झटिति कामाक्षि चरणं
पुरश्चर्याभिस्ते पुरमथनसीमन्तिनि जनाः ॥ ४० ॥

प्रचण्डार्तिक्षोभप्रमथनकृते[6] प्रातिभसरि-
त्प्रवाहप्रोद्दण्डीकरणजलदाय प्रणमताम्।
प्रदीपाय प्रौढे भवतमसि कामाक्षि चरण-
प्रसादौन्मुख्याय स्पृहयति जनोऽयं जननि ते ॥ ४१ ॥

मरुद्भिः संसेव्या सततमपि चाञ्चल्यरहिता
सदारुण्यं यान्ती परिणतिदरिद्राणसुषमा।
गुणोत्कर्षान्मञ्जीरजकलकलैस्तर्जनपटुः
प्रवालं कामाक्ष्याः परिहसति सा पादयुगली ॥ ४२ ॥

---

१. 'च दधती' इति ग-पाठः. २. 'सरत्येव' इति ग-पाठः. ३. 'परिचितिं दधान' इति ग-पाठः. ४. 'समारूढमनसः' इति क-ख-पाठः. ५. 'सुकृत' इति ग-पाठः. ६. 'प्रचण्डार्चि.' इति क-ख-पाठः.

जगद्रक्षादक्षा नलिनरुचिशिक्षापटुतरा
सुरैर्नम्या रम्या सततमभिगम्या बुधजनैः ।
द्वयी लीलालोला श्रुतिषु सुरपालादिमुकुटी-
तटीसीमाधामा तव जननि कामाक्षि पदयोः ॥ ४३ ॥

गिरां दूरौ चौरौ जडिमतिमिराणां कृतजग-
त्परित्राणौ शोणौ मुनिहृदयनीडैकनिपुणौ ।
नखैः स्मेरौ सारौ निगमवचसां खण्डितभव-
ग्रहोन्मादौ पादौ मम मनसि कामाक्षि कलये ॥ ४४ ॥

अविश्रान्तं पङ्कं यदपि कलयन्यावकमयं
निरस्यन्कामाक्षि प्रणमनजुषां पङ्कमखिलम् ।
तुलाकोटिद्वन्द्वं दधदपि च गच्छन्नतुलतां
गिरां मार्गं पादो गिरिवरसुते लङ्घयति ते ॥ ४५ ॥

प्रवालं सव्रीडं विपिनविवरे वेपयति या
स्फुरल्लीलं बालातपमधिकबालं दधाति या ।
रुचिं सांध्यां वन्ध्यां विरचयति या वर्धयतु सा
शिवं मे कामाक्ष्याः पदनलिनपाटल्यलहरी ॥ ४६ ॥

किरञ्ज्योत्स्नारीतिं नखमणिरुचा हंसमनसां
वितन्वानः प्रीतिं विकचतरुणाम्भोरुहरुचिः ।
प्रकाशः श्रीपादस्तव जननि कामाक्षि तनुते
शरत्कालप्रीतिं शशिशकलचूडप्रियतमे ॥ ४७ ॥

नखाङ्कूरस्मेरद्युतिविमलगङ्गाम्भसि सुखं
कृतस्नानं ज्ञानामृतममलमास्वाद्य नियतम् ।
उदञ्चन्माञ्जीरस्फुरणमणिदीपे मम मनो
मनोज्ञे कामाक्ष्याश्चरणमणिहर्म्ये विहरताम् ॥ ४८ ॥

भवाम्भोधौ नौकां जडिमविपिने पावकशिखां
प्रणम्रेन्द्रादीनामधिमुकुटमुत्तंसकलिकाम् ।

---

१. 'विधति' इति क-ख-पाठः.

जगत्तापज्योत्स्नामकृतकवचःपञ्जरपुटे
शुकस्त्रीं कामाक्ष्या मनसि कलये पादयुगलीम् ॥ ४९ ॥

परात्मप्राकाश्यप्रतिफलनचुञ्चुः प्रणमतां
मनोज्ञस्ते पादो मणिमुकुरमुद्रां कलयते।
यदीयां कामाक्षि प्रकृतिमधुरां शोभनदशां
विधातुं चेष्टन्ते [1]बलरिपुवधूटीकुचभराः ॥ ५० ॥

अविश्रान्तं तिष्ठन्नकृतकवचःकंदरपुटी-
कुटीरान्तः प्रौढां नखरुचिसटालीं प्रकटयन्।
प्रचण्डं खण्डत्वं नयतु मम कामाक्षि तरसा
[2]तमोवेतण्डेन्द्रं तव [3]चरणकण्ठीरवपतिः ॥ ५१ ॥

पुरस्तात्कामाक्षि प्रचुररसमाखण्डलपुरी-
पुरंध्रीणां लास्यं तव सकलमालोक्य शनकैः।
नखश्रीभिः [4]स्मेरा बहु वितनुते नूपुररवै-
श्चमत्कृत्या शङ्के चरणयुगली चाटुरचनाः ॥ ५२ ॥

[5]सरोजं निन्दन्ती नखकिरणकर्पूरशिशिरा
निषिक्ता मारारेर्मुकुटशशिरेखाहिमजलैः।
स्फुरन्ती कामाक्षि स्फुटरुचिमये पल्लवचये
तवाधत्ते मैत्रीं पथिकसुभगां पादयुगली ॥ ५३ ॥

नतानां संपत्तेरनवरतमाकर्षणजपः
प्ररोहत्संसारप्रसरगरिमस्तम्भनजपः।
त्वदीयः कामाक्षि स्मरहरमनोमोहनजपः
पटीयान्नः पायात्पदनलिनमञ्जीरनिनदः ॥ ५४ ॥

वितन्वीथा नाथे मम शिरसि कामाक्षि कृपया
पदाम्भोजन्यासं पशुपतिदृढप्राणदयिते।

---

१. शची. २. अज्ञानरूप गजेन्द्रम्. ३. चरणरूपो मृगेन्द्राधिपः ४. 'स्मेर' इति क-ख-पाठः. ५. क-ख-पुस्तकयोरस्मिञ्श्लोके पूर्वार्धोत्तरार्धयोर्व्यत्ययोऽस्ति.

पिबन्तो यन्मुद्रां प्रकटमुपकम्पापरिसरं
दृशा नानन्द्यन्ते नलिनभवनारायणमुखाः ॥ ५५ ॥
प्रणामोद्यद्बृन्दारकमुकुटमन्दारकलिका-
विलोलद्रोलम्बप्रकरमयधूमप्रचुरिमा ।
प्रदीप्तः पादाब्जद्युतिविततिपाटल्यलहरी-
कृशानुः कामाक्ष्या मम दहतु संसारविपिनम् ॥ ५६ ॥
वलक्षश्रीर्ऋक्षाधिपशिशुसदृक्षा तव नखै-
र्जिघृक्षुर्दक्षत्वं सरसिरुहभिक्षुत्वकरणे ।
क्षणान्मे कामाक्षि क्षपितभवसंक्षोभगरिमा
वचोवैचक्षण्यं चरणयुगली पक्ष्मलयताम् ॥ ५७ ॥
समन्तात्कामाक्षि क्षततिमिरसंतानसुभगा-
ननन्ताभिर्भाभिर्दिवमनु दिगन्तान्विरचयन् ।
अहंताया हन्ता मम जडिमदन्तावलरिपु-
र्विभिन्तां संतापं तव चरणचिन्तामणिरसौ ॥ ५८ ॥
दधानो भास्वत्ताममृतनिलयो लोहितवपु-
र्विनम्राणां सौम्यो गुरुरपि कवित्वं च कलयन् ।
गतौ मन्दो गङ्गाधरमहिषि कामाक्षि भजतां
तमःकेतुर्मातस्तव चरणपद्मो विजयते ॥ ५९ ॥
नयन्तीं दासत्वं नलिनभवमुख्यानसुलभ-
प्रदानां दीनानाममरतरुदौर्भाग्यजननीम् ।
जगज्जन्मक्षेमक्षयविधिषु कामाक्षि पदयो-
र्धुरीणामीष्टे कस्तव भणितुमाहोपुरुषिकाम् ॥ ६० ॥
जनोऽयं संतप्तो जननि भवचण्डांशुकिरणै-
र्[1]लब्ध्वैकं शीतं कणमपि परज्ञानपयसः ।
तमोमार्गे पान्थस्तव झटिति कामाक्षि शिशिरां
पदाम्भोजच्छायां परमशिवजाये मृगयते ॥ ६१ ॥

१. 'रलब्ध्वा किं त्वेकं' इति ग-पुस्तके, 'रलब्ध्वैकं शीतं' इति च ख-पुस्तके पाठः.

जयत्यम्ब श्रीमन्नखकिरणचीनांशुकमयं
वितानं बिभ्राणे सुरमुकुटसंघट्टमसृणे ।
निजारुण्यक्षौमास्तरणवति कामाक्षि सुलभा
बुधैः संविन्नारी तव चरणमाणिक्यभवने ॥ ६२ ॥

प्रतीमः कामाक्षि स्फुरिततरुणादित्यकिरण-
श्रियो मूलद्रव्यं तव चरणमद्रीन्द्रतनये ।
सुरेन्द्राशामापूरयति यदसौ ध्वान्तमखिलं
धुनीते दिग्भागानपि च महसा पाटलयते ॥ ६३ ॥

महाभाष्यव्याख्यापटुशयनमारोपयति वा
स्मरव्यापारेर्ष्यापिशुननिटिलं कारयति वा ।
द्विरेफाणामध्यासयति सततं वा निवसतिं
प्रणम्रान्कामाक्ष्याः पदनलिनमाहात्म्यगरिमा ॥ ६४ ॥

विवेकाम्भःस्रोतःस्नपनपरिपाटीशिशिरिते
समीभूते शास्त्रस्मरणहलसंकर्षणवशात् ।
सतां चेतःक्षेत्रे वपति तव कामाक्षि चरणौ
महासंवित्सस्यप्रकरवरबीजं गिरिसुते ॥ ६५ ॥

दधानो मन्दारस्तबकपरिपाटीं नखरुचा
वहन्दीप्तां शोणाङ्गुलिपटलचाम्पेयकलिकाम् ।
अशोकोल्लासं नः प्रचुरयतु कामाक्षि चरणौ
विकासी वासन्तः समय इव ते शर्वदयिते ॥ ६६ ॥

नखांशुप्राचुर्यप्रसृमरमरालीधवलितः
स्फुरन्मञ्जीरोद्यन्मरकतमहः शैवलयुतः ।
भवत्याः कामाक्षि स्फुटचरणपाटल्यकपटो
नदः शोणाभिख्यो नगपतितनूजे विजयते ॥ ६७ ॥

१. विष्णुशिवब्रह्मरूपान्करोतीति भावः. २. 'मरालालिधवलः' इति क-ख-पाठः.
३. 'शैवललघुः' इति ग-पाठः.

धुनानं पङ्कौघं परमसुलभं कण्टककुलै-
र्विकासव्यासङ्गं विदधदपराधीनमनिशम् ।
नखेन्दुज्योत्स्नाभिर्विशदरुचि कामाक्षि नितरा-
मसामान्यं मन्ये सरसिजमिदं ते पदयुगम् ॥ ६८ ॥
करीन्द्राय द्रुह्यत्यलसगतिलीलासु विमलैः
पयोजैर्मात्सर्यं प्रकटयति कामं कलयते ।
पदाम्भोजद्वन्द्वं तदपि तव कामाक्षि हृदयं
मुनीनां शान्तानां कथमनिशमस्मै स्पृहयते ॥ ६९ ॥
निरस्ता शोणिम्ना चरणकिरणानां तव शिवे
समिन्धानासंध्यारुचिरचलराजन्यतनये ।
असामर्थ्यादेतत्परिभवितुमेतत्समरुचां
सरोजानां जाने मुकुलयति शोभां प्रतिदिनम् ॥ ७० ॥
उपादिक्षद्दाक्ष्यं तव चरणनामा गुरुरसौ
मरालानां शङ्के मसृणगतिलालित्यसरणौ ।
अतस्ते निस्तन्द्रं नियतममुना सख्यपदवी
प्रपन्नं पाथोजं प्रतिदधाति कामाक्षि कुतुकम् ॥ ७१ ॥
दधानैः संसर्गं प्रकृतिमलिनैः षट्पदकुलै-
र्द्विजाधीशश्लाघाविधिषु विदधद्भिर्मुकुलताम् ।
रजोमिश्रैः पद्मैर्नियतमपि कामाक्षि पदयो-
र्विरोधस्ते युक्तो विषमशरवैरिप्रियतमे ॥ ७२ ॥
कवित्वश्रीमिश्रीकरणनिपुणौ रक्षणचणौ
विपन्नानां श्रीमन्नलिनमसृणौ शोणकिरणौ ।
मुनीन्द्राणामन्तःकरणशरणौ मन्दसरणौ
मनोज्ञौ कामाक्ष्या दुरितहरणौ नौमि चरणौ ॥ ७३ ॥
परस्मात्सर्वस्मादपि च परयोर्मुक्तिकरयो-
र्नखश्रीषु ज्योत्स्नाकुलिततुल्योस्ताम्रतलयोः ।

---

१. 'पुनान' इति ग-पाठ . १. 'करीन्द्राणा' इति ख-पाठ .

निलीये[1] कामाक्ष्या निगमनुतयोर्नाकिनतयो-
र्निरस्तप्रोन्मीलन्नलिनमदयोरेव पदयोः ॥ ७४ ॥
स्वभावादन्योन्यं किसलयमपीदं तव पदं
म्रदिम्ना शोणिम्ना भगवति दधाते सदृशताम् ।
वने पूर्वस्येच्छा सततमवने किं तु जगतां
परस्येत्थं भेदः स्फुरति हृदि कामाक्षि सुधियाम् ॥ ७५ ॥
कथं वाचालोऽपि प्रकटमणिमञ्जीरनिनदैः
सदैवानन्दार्द्रान्विरचयति वाचंयमजनान् ।
प्रकृत्या ते शोणच्छविरपि च कामाक्षि चरणो
मनीषानैर्मल्यं कथमिव नृणां मांसलयते ॥ ७६ ॥
चलत्तृष्णावीचीपरिचलनपर्याकुलतया
मुहुर्भ्रान्त्वा तान्तः परमशिववामाक्षि परवान् ।
तितीर्षुः कामाक्षि प्रचुरतरकर्माम्बुधिममुं
कदाहं लप्स्ये ते चरणमणिसेतुं गिरिसुते ॥ ७७ ॥
विशुष्यन्त्यां प्रज्ञासरिति दुरितग्रीष्मसमय-
प्रभावेण क्षीणे सति मम मनः केकिनि शुचा ।
त्वदीयः कामाक्षि स्फुरितचरणाम्भोदमहिमा
नभोमासाटोपं नगपतिसुते किं न कुरुते ॥ ७८ ॥
विनम्राणां चेतोभवनवलभीसीम्नि चरण-
प्रदीपे प्राकाश्यं दधति तव निर्धूततमसि ।
असीमा कामाक्षि स्वयमलघुदुष्कर्मलहरी
विघूर्णन्ती शान्तिं शलभपरिपाटीव भजते ॥ ७९ ॥
विराजन्ती शुक्तिर्नखकिरणमुक्तामणितते
विपत्पाथोराशौ तरिरपि नराणां प्रणमताम् ।
त्वदीयः कामाक्षि ध्रुवमलघुवह्निर्भववने[2]
मुनीनां ज्ञानाग्नेररणिरयमङ्घ्रिर्विजयते ॥ ८० ॥

---

१. 'विलीये' इति क-ख-पाठः. २. 'लघुदावो भववने' इति क-ख-पाठः.

समस्तैः संसेव्यः सततमपि कामाक्षि विबुधैः
　स्तुतो गन्धर्वस्त्रीसुललितविपञ्चीकलरवैः ।
भवत्या भिन्दानो भवगिरिकुलं जृम्भिततमो-
　वलद्रोही मातश्चरणपुरुहूतो विजयते ॥ ८१ ॥
वसन्तं भक्तानामपि मनसि नित्यं परिलस-
　द्धनच्छायापूर्णं शुचिमपि नृणां पापशमनम् ।
नखेन्दुज्योत्स्नाभिः शिशिरमपि पद्मोदयकरं
　नमामः कामाक्ष्याश्चरणमधिकाश्चर्यकरणम् ॥ ८२ ॥
कवीन्द्राणां नानाभणितिगुणचित्रीकृतवचः-
　प्रपञ्चव्यापारप्रकटनकलाकौशलनिधिः ।
अधःकुर्वन्नब्जं सनकभृगुमुख्यैर्मुनिजनै-
　र्नमस्यः कामाक्ष्याश्चरणपरमेष्ठी विजयते ॥ ८३ ॥
भवत्याः कामाक्षि स्फुरितपदपङ्केरुहभुवां
　परागाणां पूरैः परिहृतकलङ्कव्यतिकरैः ।
नतानामामृष्टे हृदयमुकुरे निर्मलरुचि
　प्रसन्ने निःशेषं प्रतिफलति विश्वं गिरिसुते ॥ ८४ ॥
तव त्रस्तं पादात्किसलयमरण्यान्तरमगा-
　त्परं रेखारूपं कमलममुमेवाश्रितमभूत्[1] ।
जितानां कामाक्षि द्वितयमपि युक्तं परिभवे
　विदेशे वासो वा शरणगमनं वा निजरिपोः ॥ ८५ ॥
गृहीत्वा याथार्थ्यं निगमवचसां देशिककृपा-
　कटाक्षार्कज्योतिःशमितममतावन्धतमसः ।
यतन्ते कामाक्षि प्रतिदिवसमन्तर्द्रढयितुं
　त्वदीयं पादाब्जं सुकृतपरिपाकेन सुजनाः ॥ ८६ ॥
जडानामप्यम्ब स्मरणसमये त्वच्चरणयो-
　र्भ्रमन्मन्थक्ष्माभृद्घुमघुमितसिन्धुप्रतिभटाः ।

१. 'मेवाश्रयमगात्' इति ग-पाठः.

[1]प्रसन्नाः कामाक्षि प्रसभमधरस्पन्दनकला
विभान्ति स्वच्छन्दं प्रकृतिपरिपक्का भणितयः ॥ ८७ ॥
वहन्नप्यश्रान्तं मधुरनिनदं हंसकमसौ
तमेवाधः कर्तुं किमिव यतते केलिगमने ।
भवस्यैवानन्दं विदधदपि कामाक्षि चरणो
भवत्यास्तद्द्रोहं भगवति किमेवं वितनुते ॥ ८८ ॥
यदत्यन्तं ताम्यत्यलसगतिवार्तास्वपि शिवे
तदेतत्कामाक्षि प्रकृतिमृदुलं ते पदयुगम् ।
किरीटैः संघट्टं कथमिव सुरौघस्य सहते
मुनीन्द्राणामास्ते मनसि च कथं सूचिनिशिते ॥ ८९ ॥
मनोरङ्गे मत्के विबुधजनसंमोदजननी
सरागव्यासङ्गं सरसमृदुसंचारसुभगा ।
मनोज्ञा कामाक्षि प्रकटयतु लास्यप्रकरणं
चलन्मञ्जीरा ते चरणयुगली नर्तकवधूः ॥ ९० ॥
परिष्कुर्वन्मातः पशुपतिकपर्दं चरणराट्
पराचां हृत्पद्मं परमभणितीनां च मुकुटम् ।
भवाख्ये पाथोधौ परिहरतु कामाक्षि ममता-
पराधीनत्वं मे परिमुषितपाथोजमहिमा ॥ ९१ ॥
प्रसूनैः संपर्कादमरतरुणीकुन्तलभवै-
रभीष्टानां दानादनिशमपि कामाक्षि नमताम् ।
स्वसङ्गात्कङ्केल्लिप्रसवजनकत्वेन च शिवे
त्रिधा धत्ते वार्तां सुरभिरिति पादो गिरिसुते ॥ ९२ ॥
महामोहस्तेनव्यतिकरभयात्पालयति यो
विनिक्षिप्तं स्वस्मिन्निजजनमनोरत्नमनिशम् ।
स रागस्योद्रेकात्सततमपि कामाक्षिरुचिरां
किमेवं पादोऽसौ किसलयरुचिं चोरयति ते ॥ ९३ ॥

---

1. 'प्रपन्नाः' इति क-ख-पाठः.

सदा स्वादुंकारं विषयलहरीशालिकणिकां
समास्वाद्य श्रान्तं हृदयशुकपोतं जननि मे ।
कृपाजाले भालेक्षणमहिषि कामाक्षि रभसा-
द्गृहीत्वा रुन्धीथाश्चरणयुगलीपञ्जरपुटे ॥ ९४ ॥

धुनानं कामाक्षि स्मरणलवमात्रेण जडिम-
ज्वरप्रौढिं गूढस्थितिनिगमनैकुञ्जकुहरे ।
अलभ्यं सर्वेषां कतिचन लभन्ते सुकृतिन-
श्चिरादन्विष्यन्तस्तव चरणसिद्धौषधमिदम् ॥ ९५ ॥

रणन्मञ्जीराभ्यां ललितगमनाभ्यां सुकृतिनां
मनोवास्तव्याभ्यां मथिततिमिराभ्यां नखरुचा ।
निधेयाभ्यां पत्या निजशिरसि कामाक्षि सततं
नमस्ते पादाभ्यां नलिनमृदुलाभ्यां गिरिसुते ॥ ९६ ॥

यशः सूते मातर्मधुरकवितां पक्ष्मलयते
श्रियं दत्ते वित्ते कमपि परिपाकं प्रथयते ।
सतां पाशग्रन्थिं शिथिलयति किं किं न कुरुते
प्रपन्ने कामाक्ष्याः प्रणतिपरिपाटी चरणयोः ॥ ९७ ॥

मनीषां माहेन्द्रीं ककुभमिव ते कामपि दशां
प्रधत्ते कामाक्ष्याश्चरणतरुणादित्यकिरणः ।
यदीये संपर्के धृतरसमरन्दा कवयतां
परीपाकं धत्ते परिमलवती सूक्तिनलिनी ॥ ९८ ॥

सुरागे राकेन्दुप्रतिनिधिमुखे पर्वतसुते
चिराल्लभ्ये भक्त्या शमधनजनानां परिषदा ।
मनोभृङ्गो मत्कः पदकमलयुग्मे जननि ते
प्रकामं कामाक्षि त्रिपुरहरवामाक्षि रमताम् ॥ ९९ ॥

---

१. 'हृदयसुकपोत' इति ख-पाठः २. 'प्रसन्ने' इति क-ख-पाठः. ३ 'प्रकृति' इति ग-पाठः. ४. क-ग-पुस्तकयो. 'सुरागे' इत्यादि, 'पदद्वन्द्व' इत्यादि च पद्य नास्ति.

पदद्वन्द्वं मन्दं गतिषु निवसन्तं हृदि सतां
गिरामन्ते भ्रान्तं कृतकरहितानां परिवृढे ।
जनानामानन्दं जननि जनयन्तं प्रणमतां
त्वदीयं कामाक्षि प्रतिदिनमहं नौमि विमलम् ॥ १०० ॥
इदं यः कामाक्ष्याश्चरणनलिनस्तोत्रशतकं
जपेन्नित्यं भक्त्या निखिलजगदाह्लादजनकम् ।
स विश्वेषां वन्द्यः सकलकविलोकैकतिलक-
श्चिरं भुक्त्वा भोगान्परिणमति चिद्रूपकलया ॥ १०१ ॥

इति श्रीमूककविसार्वभौमकृतौ पञ्चशत्या पादारविन्दशतकं तृतीयम् ।

---

आर्याशतकम् ।

कारणपरचिद्रूपा काञ्चीपुरसीम्नि कामपीठगता ।
काचन विहरति करुणा काश्मीरस्तबककोमलाङ्गलता ॥ १ ॥
चं न काञ्चीतिलकं करधृतकोदण्डबाणसृणिपाशम् ।
कठिनस्तनभरनम्रं कैवल्यानन्दकन्दमवलम्बे ॥ २ ॥
चिन्तितफलपरिपोषणचिन्तामणिरेव काञ्चिनिलया मे ।
चिरतरसुचरितसुलभा चित्तं शिशिरयतु चित्सुधाधारा ॥ ३ ॥
परतन्त्रा वयमनया पङ्कजसब्रह्मचारिलोचनया ।
परया काञ्चीपुरया पर्वतपर्यायपीनकुचभरया ॥ ४ ॥
ऐश्वर्यमिन्दुमौलेरैकात्म्यप्रकृति काञ्चिमध्यगतम् ।
ऐन्दवकिशोरशेखरमैदंपर्यं चकास्ति निगमानाम् ॥ ५ ॥
तुङ्गाभिरामकुचभरशृङ्गारितमाश्रयामि काञ्चिगतम् ।
गङ्गाधरपरतन्त्रं शृङ्गाराद्वैततन्त्रसिद्धान्तम् ॥ ६ ॥
मधुरधनुषा महीधरजनुषा नन्दामि सुरभिबाणजुषा ।
चिद्वपुषा काञ्चिपुरे केलिजुषा बन्धुजीवकान्तिमुषा ॥ ७ ॥
कुटिलकचं कठिनकुचं कुन्दस्मितकान्ति कुङ्कुमच्छायम् ।
कुरुते विहृतिं काञ्च्यां कुलपर्वतसार्वभौमसर्वस्वम् ॥ ८ ॥

पञ्चशरशास्त्रबोधनपरमाचार्येण दृष्टिपातेन ।
काञ्चीसीम्नि कुमारी काचन मोहयति कामजेतारम् ॥ ९ ॥
श्रितकम्पासीमानं शिथिलितपरमेशधैर्यमहिमानम् ।
कलये पाटलिमानं कंचन कञ्चुकितभुवनभूमानम् ॥ १० ॥
आदृतकाञ्चीनिलयामाद्यामारूढयौवनाटोपाम् ।
आगमवतंसकलिकामानन्दाद्वैतकन्दली वन्दे ॥ ११ ॥
काञ्चीरत्नविभूषां कामपि कंदर्पसूतिकापाङ्गीम् ।
परमां कलामुपासे परशिववामाङ्कपीठिकासीनाम् ॥ १२ ॥
कम्पातीरचराणां करुणाकोरकितदृष्टिपातानाम् ।
केलीवनं मनो मे केषांचिद्भवतु चिद्विलासानाम् ॥ १३ ॥
आम्रतरुमूलवसतेरादिमपुरुषस्य नयनपीयूषम् ।
आरब्धयौवनोत्सवमाम्नायरहस्यमन्तरवलम्बे ॥ १४ ॥
अधिकाञ्चि परमयोगिभिरादिमपरपीठसीम्नि दृश्येन ।
अनुबद्धं मम मानसमरुणिमसर्वस्वसंप्रदायेन ॥ १५ ॥
अङ्कितशंकरदेहामङ्कुरितोरोजकङ्कणाश्लेषैः ।
अधिकाञ्चि नित्यतरुणीमद्राक्षं कांचिदद्भुतां बालाम् ॥ १६ ॥
मधुरस्मितेन रमते मांसलकुचभारमन्दगमनेन ।
मध्येकाञ्चि मनो मे मनसिजसाम्राज्यगर्वबीजेन ॥ १७ ॥
धरणिमयीं तरणिमयीं पवनमयीं गगनदहनहोतृमयीम् ।
अम्बुमयीमिन्दुमयीमम्बामनुकम्पमादिमामीक्षे ॥ १८ ॥
लीनस्थिति मुनिहृदये ध्यानस्तिमितं तपस्यदुपकम्पम् ।
पीनस्तनभरमीडे मीनध्वजतन्त्रपरमतात्पर्यम् ॥ १९ ॥
श्वेता मन्थरहासिते शाता मध्ये च वाङ्मनोतीता ।
शीता लोचनपाते स्फीता कुचसीम्नि शाश्वती माता ॥ २० ॥
पुरतः कदा नु करवै पुरवैरिविमर्दपुलकिताङ्गलताम् ।
पुनतीं काञ्चीदेशं पुष्पायुधवीर्यसरसपरिपाटीम् ॥ २१ ॥

---

१. 'परमशिवधैर्य' इति ख-ग-घ-पाठः. २. कम्पानदीसमीपे. ३. कृशा.

पुण्या कापि पुरंध्री पुङ्खितकंदर्पसंपदा वपुषा ।
पुलिनचरी कम्पायाः पुरमथनं पुलकनिचुलितं कुरुते ॥ २२ ॥
तनिमाद्वैतवलग्नं तरुणारुणसंप्रदायतनुलेखम् ।
तटसीमनि कम्पायास्तरुणिमसर्वस्वमाद्यमद्राक्षम् ॥ २३ ॥
पौष्टिककर्मविपाकं पौष्पशरं [1]सविधसीम्नि कम्पायाः ।
अद्राक्षमात्तयौवनमभ्युदयं किंचिदर्धशशिमौलेः ॥ २४ ॥
संश्रितकाञ्चीदेशे सरसिजदौर्भाग्यजाग्रदुत्तंसे ।
संविन्मये विलीये सारस्वतपुरुषकारसाम्राज्ये ॥ २५ ॥
मोदितमधुकरविशिखं स्वादिमसमुदायसारकोदण्डम् ।
आदृतकाञ्चीखेलनमादिममारुण्यभेदमाकलये ॥ २६ ॥
उररीकृतकाञ्चिपुरीमुपनिषदरविन्दकुहरमधुधाराम् ।
उन्नम्रस्तनकलशीमुत्सवलहरीमुपास्महे शंभोः ॥ २७ ॥
एणशिशुदीर्घलोचनमेनः परिपन्थि संततं नमताम् ।
एकाम्रनाथजीवितमेवंपददूरमेकमवलम्बे ॥ २८ ॥
स्मयमानमुखं काञ्चीमयमानं कमपि देवताभेदम् ।
दयमानं वीक्ष्य मुहुर्वयमानन्दामृताम्बुधौ मग्नाः ॥ २९ ॥
कुतुकजुषि काञ्चिदेशे कुमुदतपोराशिपाकशेखरिते ।
कुरुते जनो मनोऽयं कुलगिरिपरिवृढकुलैकमणिदीपे ॥ ३० ॥
वीक्षेमहि काञ्चिपुरे विपुलस्तनकलशगरिमपरवशितम् ।
विद्रुमसहचरदेहं विभ्रमसमवायसारसंनाहम् ॥ ३१ ॥
कुरुविन्दगोत्रगात्रं कूलचरं किमपि नौमि कम्पायाः ।
कूलंकषकुचकुम्भं कुसुमायुधवीर्यसारसंरम्भम् ॥ ३२ ॥
कुड्मलितकुचकिशोरैः कुर्वाणैः काञ्चिदेशसौहार्दम् ।
कुङ्कुमशोणैर्निचितं कुशलपथं शंभुसुकृतसंभारैः ॥ ३३ ॥
अङ्कितकुचेन केनचिदन्धंकरणौषधेन कमलानाम् ।
अन्तःपुरेण शंभोरलंक्रिया कापि कल्प्यते काञ्च्याः ॥ ३४ ॥

---

१. 'सौधसीम्नि' इति क-ख-ग-पाठः.

उररीकरोमि संततमूष्मलफालेन लालितं पुंसा ।
उपकम्पमुचितखेलनमुर्वीधरवंशसंपदुन्मेषम् ॥ ३५ ॥
अङ्कुरितस्तनकोरकमङ्कालंकारमेकचूतपतेः ।
आलोकेमहि कोमलमागमसंलापसारयाथार्थ्यम् ॥ ३६ ॥
पुञ्जितकरुणमुदञ्चितशिञ्जितमणिकाञ्चि किमपि काञ्चिपुरे ।
मञ्जरितमृदुलहासं पिञ्जरतनुरुचि पिनाकिमूलधनम् ॥ ३७ ॥
लोलहृदयोऽस्मि शंभोर्लोचनयुगलेन लेह्यमानायाम् ।
ललितपरमशिवायां लावण्यामृततरङ्गमालायाम् ॥ ३८ ॥
मधुकरसहचरचिकुरैर्मदनागमसमयदीक्षितकटाक्षैः ।
मण्डितकम्पातीरैर्मङ्गलकन्दैर्ममास्तु सारूप्यम् ॥ ३९ ॥
वदनारविन्दवक्षोवामाङ्कतटीवशंवदीभूता ।
पुरुषत्रितये त्रेधा पुरंध्रिरूपा त्वमेव कामाक्षि ॥ ४० ॥
बाधाकरीं भवाब्धेराधाराद्यम्बुजेषु विचरन्तीम् ।
आधारीकृतकाञ्चीं बोधामृतवीचिमेव विमृशामः ॥ ४१ ॥
कलयाम्यन्तः शशधरकलयाङ्कितमौलिममलचिद्वलयाम् ।
अलयामागमपीठीनिलयां वलयाङ्कसुन्दरीमम्बाम् ॥ ४२ ॥
शर्वादिपरमसाधकगुर्वानीताय कामपीठजुषे ।
सर्वाकृतये शोणिमगर्वाय समर्प्यते हृदयम् ॥ ४३ ॥
समया सांध्यमयूखैः समया बुद्ध्या सदैव शीलितया ।
उमया काञ्चीरतया न मया लभ्येत किं नु तादात्म्यम् ॥ ४४ ॥
जन्तोस्तव पदपूजनसंतोषतरङ्गितस्य कामाक्षि ।
बन्धो यदि भवति पुनः सिन्धोरम्भःसु बम्भ्रमीति शिला ॥ ४५ ॥
कुण्डलि कुमारि कुटिले चण्डि चराचरसवित्रि चामुण्डे ।
गुणिनि गुहारिणि गुह्ये गुरुमूर्ते त्वां नमामि कामाक्षि ॥ ४६ ॥

---

१. 'पिञ्जरित' इति पुस्तकचतुष्टयेऽपि छन्दोभङ्गदूषितः पाठ. २. 'शीलतया' इति क-ख-पुस्तकयोः, 'शीतलया' इति च ग-पुस्तके पाठः. ३. 'गुहागिणि' इति क-ख-ग-पाठः.

अभिदाकृतिर्भिदाकृतिरचिदाकृतिरपि चिदाकृतिर्मातः ।
अनहंता त्वमहंता भ्रमयसि कामाक्षि शाश्वती विश्वम् ॥ ४७ ॥
शिव शिव पश्यन्ति समं श्रीकामाक्षीकटाक्षिताः पुरुषाः ।
विपिनं भवनममित्रं मित्रं लोष्टं च युवतिबिम्बोष्ठम् ॥ ४८ ॥
कामपरिपन्थिकामिनि कामेश्वरि कामपीठमध्यगते ।
कामदुघा भव कमले कामकले कामकोटि कामाक्षि ॥ ४९ ॥
मध्येहृदयं मध्येनिटिलं मध्येशिरोऽपि वास्तव्याम् ।
चण्डकरशक्रकार्मुकचन्द्रसमाभां नमामि कामाक्षीम् ॥ ५० ॥
अधिकाञ्ची केलिलोलैरखिलागमयन्त्रतन्त्रमन्त्रमयैः ।
अतिशीतं मम हृदयं विषमशरद्रोहिजीवनोपायैः ॥ ५१ ॥
नन्दति मम हृदि काचन मन्दिरयन्ती निरन्तरं काञ्चीम् ।
इन्दुरविमण्डलकुचा बिन्दुवियन्नादपरिणता तरुणी ॥ ५२ ॥
शम्पालतासवर्णं संपादयितुं भवज्वरचिकित्साम् ।
लिम्पामि मनसि कंचन कम्पातटरोहि सिद्धभैषज्यम् ॥ ५३ ॥
अनुमितकुचकाठिन्यामधिवक्षःपीठमङ्गजन्मरिपोः ।
आनन्ददां भजे तामानङ्गब्रह्मतत्त्वबोधिसिराम् ॥ ५४ ॥
ऐक्षिषि पाशाङ्कुशधरहस्तान्तं विस्मयार्हवृत्तान्तम् ।
अधिकाञ्चि निगमवाचां सिद्धान्तं शूलपाणिशुद्धान्तम् ॥ ५५ ॥
आहितविलासभङ्गीमाब्रह्मस्तम्बशिल्पकल्पनया ।
आश्रितकाञ्चीमतुलामाद्यां विस्फूर्तिमाद्रिये विद्याम् ॥ ५६ ॥
मूकोऽपि जटिलदुर्गतिशोकोऽपि स्मरति यः क्षणं भवतीम् ।
एको भवति स जन्तुर्लोकोत्तरकीर्तिरेव कामाक्षि ॥ ५७ ॥
पञ्चदशवर्णरूपं कंचन काञ्चीविहारधौरेयम् ।
पञ्चशरीयं शंभोर्वञ्चनवैदग्ध्यमूलमवलम्बे ॥ ५८ ॥

---

१. 'रचिदाकृतिश्चिदाकृतिश्च मातः' इति क-ख-ग-पाठः. २. 'असमशर' इति क-ख-ग-पाठः.

परिणतवतीं चतुर्धा पदवीं सुधियां समेत्य सौषुम्णीम् ।
पञ्चाशदर्णकल्पितपदशिल्पां तां नमामि कामाक्षीम् ॥ ५९ ॥
आदिक्षन्मम गुरुराडादिक्षान्ताक्षरात्मिकां विद्याम् ।
स्वादिष्टचापदण्डां नेदिष्ठामेव कामपीठगताम् ॥ ६० ॥
तुष्यामि हर्षितस्मरशासनया काञ्चिपुरि कृतासनया ।
स्वासनया सकलजगद्भासनया कलितशम्बरासनया ॥ ६१ ॥
प्रेमवती कम्पायां स्थेमवती यतिमनःसु भूमवती ।
सामवती नित्यगिरा सोमवती शिरसि भाति हैमवती ॥ ६२ ॥
कौतुकिना कम्पायां कौसुमचापेन कीलितेनान्तः ।
कुलदैवतेन महता कुड्मलमुद्रां धुनोतु नः प्रतिभा ॥ ६३ ॥
केनापि मिलितदेहा यूना स्वाहासहायतिलकेन ।
सहकारमूलदेशे संविद्रूपा कुटुम्बिनी रमते ॥ ६४ ॥
कुसुमशरगर्वसंपत्कोपगृहं भाति काञ्चिमध्यगतम् ।
स्थापितमस्मिन्कथमपि गोपितमन्तर्मया मनोरत्नम् ॥ ६५ ॥
दग्धषडध्वारण्यं दरदलितकुसुम्भसंभृतारुण्यम् ।
कलये नवतारुण्यं कम्पातटसीम्नि किमपि कारुण्यम् ॥ ६६ ॥
अधिकाञ्चि वर्धमानामतुलां करवाणि पारणामक्ष्णोः ।
आनन्दपाकभेदामरुणिमपरिणामगर्वपल्लविताम् ॥ ६७ ॥
बाणसृणिपाशकार्मुकपाणिममुं कमपि कामपीठगतम् ।
एणधरकोणचूडं शोणिमपरिपाकभेदमाकलये ॥ ६८ ॥
किं वा फलति ममान्यैर्बिम्बाधरचुम्बिमन्दहासमुखी ।
संबाधकरी तमसामम्बा जागर्ति मनसि कामाक्षी ॥ ६९ ॥
मञ्चे सदाशिवमये परशिवमयललितपौष्पपर्यङ्के ।
अधिचक्रमध्यमास्ते कामाक्षी नाम किमपि मम भाग्यम् ॥ ७० ॥

---

१. 'पञ्चाशद्वर्ण' इति क-ख-ग-पाठः. २ आदिक्षत् उपदिष्टवान्. ३. इक्षुधनुर्धारिणीम्. ४. स्थैर्यवती. ५. ऐश्वर्यवती. ६. सङ्कोचम्.

लक्ष्योऽस्मि कामपीठीलासिकया घनकृपाम्बुराशिकया ।
श्रुतियुवतिकुन्तलीमणिमालिकया तुहिनशैलबालिकया ॥ ७१ ॥
लीये पुरहरजाये माये तव तरुणपल्लवच्छाये ।
चरणे चन्द्राभरणे काञ्चीशरणे नतार्तिसंहरणे ॥ ७२ ॥
मूर्तिमयि मुक्तिबीजे मूर्ध्नि स्तवकितचकोरसाम्राज्ये ।
मोदितकम्पाकूले मुहुर्मुहुर्मनसि मुमुदिषास्माकम् ॥ ७३ ॥
वेदमयीं नादमयीं बिन्दुमयीं परपदोद्यदिन्दुमयीम् ।
मन्त्रमयीं तन्त्रमयीं प्रकृतिमयीं नौमि विश्वविकृतिमयीम् ॥ ७४ ॥
पुरमथनपुण्यकोटी पुञ्जितकविलोकसूक्तिरसधाटी ।
मनसि मम कामकोटी विहरतु करुणाविपाकपरिपाटी ॥ ७५ ॥
कुटिलं चटुलं पृथुलं मृदुलं कचनयनजघनचरणेषु ।
अवलोकितमवलम्बनमधिकम्पातटममेयमस्माभिः ॥ ७६ ॥
प्रत्यङ्मुख्या दृष्ट्या प्रसाददीपाङ्कुरेण कामाक्ष्याः ।
पश्यामि निस्तुलमहो पचेलिमं किमपि परशिवोल्लासम् ॥ ७७ ॥
विद्ये विधातृविषये कात्यायनि कालि कामकोटि कले ।
भारति भैरवि भद्रे शाकिनि शांभवि शिवे स्तुवे भवतीम् ॥७८॥
मालिनि महेशचारिणि काञ्चीखेलिनि विपक्षकालिनि ते ।
शूलिनि विद्रुमशालिनि सुरजनपालिनि कपालिनि नमोऽस्तु ॥७९॥
देशिक इति किं शङ्के तत्तादृक्तव नु तरुणिमोन्मेषः ।
कामाक्षि शूलपाणेः कामागमतन्त्रयज्ञदीक्षायाम् ॥ ८० ॥
वेतण्डकुम्भडम्बरवैतण्डिककुचभरार्तमध्याय ।
कुङ्कुमरुचे नमस्यां शंकरनयनामृताय रचयामः ॥ ८१ ॥
अधिकाञ्चितमणिकाञ्चनकाञ्चीमधिकाञ्चि कांचिदद्राक्षम् ।
अवनतजनानुकम्पामनुकम्पाकूलमस्मदनुकूलाम् ॥ ८२ ॥

---

१. 'मुमुदुषा' इति क-ख-ग-पाठः. २. 'निस्तुललये' इति क-ख-ग-पाठः. ३. 'विपक्षहालिनि' इति क-ख-ग-पाठः. ४. 'इति नु किमेषः शङ्के' इति घ-पाठः. ५. 'तन्त्रयन्त्र' इति घ-पाठः. ६. 'कुङ्कुमरुचये' इति क-ख-घ-पाठः.

परिचितकम्पातीरं पर्वतराजन्यसुकृतसंनाहम् ।
परगुरुकृपया वीक्षे परमशिवोत्सङ्गमङ्गलाभरणम् ॥ ८३ ॥
दग्धमदनस्य शंभोः प्रथीयसीं ब्रह्मचर्यवैदग्धीम् ।
तव देवि चतुरिमश्रीतरुणिमपाको न चक्षमे मातः ॥ ८४ ॥
मदजलतमालपत्रा वसनितपत्रा कराहृतखनित्रा ।
विहरति पुलिन्दयोषा गुञ्जाभूषा फणीन्द्रकृतवेषा ॥ ८५ ॥
अङ्के शुकिनी गीते कौतुकिनी परिसरे च गायकिनी ।
जयसि सविधेऽम्ब [1]भैरवमण्डलिनी श्रवसि शङ्खकुण्डलिनी ॥८६॥
[2]प्रणतजनतापवर्गा कृतरणसर्गाससिंहसंसर्गा ।
कामाक्षि मुदितभर्गा हतरिपुवर्गा त्वमेव सा दुर्गा ॥ ८७ ॥
श्रवणचलद्वेतण्डा समरोद्दण्डा [3]धुतासुरशिखण्डा ।
देवि कलितान्त्रखण्डा धृतनरमुण्डा त्वमेव चामुण्डा ॥ ८८ ॥
उर्वीधरेन्द्रकन्ये दर्वीभरितेन भक्तपूरेण ।
गुर्वीमकिंचनार्तिं खर्वीकुरुषे त्वमेव कामाक्षि ॥ ८९ ॥
[4]ताडितरिपुपरिपीडनभयहरणनिपुणहलमुसला ।
क्रोडपतिभीषणमुखी क्रीडसि जगति त्वमेव कामाक्षि ॥ ९० ॥
स्मरमथनवरणलोला मन्मथहेलाविलासमणिशाला ।
कनकरुचिचौर्यशीला त्वमम्ब बाला कराब्जधृतमाला ॥ ९१ ॥
विमलपटी [5]कमलकुटी पुस्तकरुद्राक्षशस्तहस्तपुटी ।
कामाक्षि पक्ष्मलाक्षी कलितविपञ्ची विभासि वैरञ्ची ॥ ९२ ॥
कुङ्कुमरुचिपिङ्गमसृक्पङ्किलमुण्डालिमण्डितं मातः ।
जयति तव रूपभेदं [6]जपपटपुस्तकवराभयाब्जकरम् ॥ ९३ ॥
[7]कनकमणिकलितभूषां कालायसकलहायमानकान्तिजालाम् ।
कामाक्षि शीलये त्वां कपालशूलाभिरामकरकमलाम् ॥ ९४ ॥

---

१. 'भैरवि' इति क-ख-ग-पाठ. २. प्रणतजनताया मोक्षरूपा. ३. 'धृता' इति क-ख-ग-पाठः. ४. सर्वेषु पुस्तकेष्वयमेव दुष्ट' पाठोऽस्ति. ५. 'कमलघुटी' इति घ-पाठः. ६. 'जपवट' इति घ-पाठः. ७. सर्वेषु पुस्तकेष्वयमेव छन्दोभङ्गयुक्तः पाठः

लोहितिमपुञ्जमध्ये मोहितभुवनं मुदा निरीक्षन्ते ।
वदनं तव कुचयुगलं काञ्चीसीमां च केऽपि कामाक्षि ॥ ९५ ॥
जलधिद्विगुणितहुतवहदशदिनेशकलाश्विनेयदलैः ।
नलिनैर्महेशि गच्छसि सर्वोत्तमं त्वं करन्ध्रभृतनलिनम् ॥ ९६ ॥
सत्कृतदेशिकचरणा सबीजनिर्बीजयोगनिश्रेण्या ।
अपवर्गसौधवलभीमारोहन्त्यम्ब केऽपि तव कृपया ॥ ९७ ॥
अन्तरपि वहिरपि त्वं जन्तुततेरन्तकान्तकृदहंते ।
चिन्तितसंतानकला संततमपि संतनुष्व महिमानम् ॥ ९८ ॥
जय जय जगदम्ब शिवे जय जय कामाक्षि जयजयाद्रिसुते ।
जय जय महेशदयिते जय जय चिद्गगनकौमुदीधारे ॥ ९९ ॥
आर्याशतकं भक्त्या पठतामार्याकटाक्षेण ।
निःसरति वदनकमलाद्वाणी पीयूषधोरणी दिव्या ॥ १०० ॥

इति श्रीमूककविसार्वभौमकृतौ पञ्चशत्यामार्याशतकं चतुर्थम् ।

---

## स्तुतिशतकम् ।

पाण्डित्यं परमेश्वरि स्तुतिविधौ नैवाश्रयन्ते गिरां
वैरिञ्चान्यपि गुम्फनानि विगलद्गर्वाणि शर्वाणि ते ।
स्तोतुं त्वां परिफुल्लनीलनलिन श्यामाक्षि कामाक्षि मां
वाचालीकुरुते तथापि नितरां त्वत्पादसेवादरः ॥ १ ॥
तापिच्छस्तबकत्विषे तनुभृतां दारिद्र्यमुद्राद्विषे
संसाराख्यतमोमुषे पुररिपोर्वामाङ्कसीमाजुषे ।
कम्पातीरमुपेयुषे कवयतां जिह्वाकुटीं जग्मुषे
विश्वत्राणपुषे नमोऽस्तु सततं तस्मै परज्योतिषे ॥ २ ॥
ये संध्यारुणयन्ति शंकरजटाकान्तारचन्द्रार्भकं
सिन्दूरन्ति च ये पुरंदरवधूसीमन्तसीमान्तरे ।

---

१. 'कुञ्जमध्ये' इति ग-पाठः २. 'किमपि' इति क-ख-ग-पाठः. ३. इयमार्यापि च्छन्दोभङ्गदूषितैव. ४ 'सर्वोत्तरं' इति घ-पाठ. ५. 'सतानवता' इति घ-पाठः. ६. इयमार्या घ-पुस्तके नास्ति.

पुण्यं ये परिपक्कयन्ति भजतां काञ्चीपुरे माममी
पायासुः परमेश्वरप्रणयिनीपादोद्भवाः पांसवः ॥ ३ ॥
कामाडम्बरपूरया शशिरुचा कम्रस्मितानां त्विषा
कामारेरनुरागसिन्धुमधिकं कल्लोलितं तन्वती ।
कामाक्षीति समस्तसज्जननुता कल्याणदात्री नृणां
कारुण्याकुलमानसा भगवती कम्पातटे जृम्भते ॥ ४ ॥
कामाक्षीणपराक्रमप्रकटनं संभावयन्ती दृशा
श्यामा क्षीरसहोदरस्मितरुचिप्रक्षालिताशान्तरा ।
वामाक्षीजनमौलिभूषणमणिर्वाचां परा देवता
कामाक्षीति विभाति कापि करुणा कम्पातटिन्यास्तटे ॥ ५ ॥
श्यामा काचन चन्द्रिकात्र भुवने पुण्यात्मनामानने
सीमाशून्यकवित्ववर्षजननी या कापि कादम्बिनी ।
माराराातिमनोविमोहनविधौ काचित्तमःकन्दली
कामाक्ष्याः करुणाकटाक्षलहरी कामाय मे कल्पताम् ॥ ६ ॥
प्रौढध्वान्तकदम्बके कुमुदिनीपुण्याङ्कुरं दर्शय-
ञ्ज्योत्स्नासंगमनेऽपि कोकमिथुनं मिश्रं समुद्भावयन् ।
कालिन्दीलहरीदशां प्रकटयन्कम्रां नभस्यद्भुतां
कश्चिन्नेत्रमहोत्सवो विजयते काञ्चीपुरे शूलिनः ॥ ७ ॥
तन्त्राभूततमालनीलसुषमैस्तारुण्यलीलागृहै-
स्तारानाथकिशोरलाञ्छितकचैस्ताम्रारविन्देक्षणैः ।
मातः संश्रयतां मनो मनसिजप्रागल्भ्यनाडिंधमैः
कम्पातीरचरैर्घनस्तनभरैः पुण्याङ्कुरैः शांकरैः ॥ ८ ॥
नित्यं निश्चलतामुपेत्य मरुतां रक्षाविधिं पुष्णती
तेजःसंचयपाटवेन किरणानुष्णद्युतेर्मुष्णती ।

---

1. 'वसतां' इति घ-पाठः. 2. 'रुचा' इति क-ख-ग-पाठः. 3. 'तरुणी' इति क-ख-ग-पाठः. 4. पुस्तकचतुष्टयेऽप्यशुद्ध एवायं श्लोक

काञ्चीदेशगतापि दीप्तिजननी विश्वान्तरे जृम्भते
काचिच्चित्रमिहं स्मृतापि मनसो निर्वापिका दीपिका ॥ ९ ॥
कान्तैः केशरुचां चयैर्भ्रमरितं मन्दस्मितैः पुष्पितं
कान्त्या पल्लवितं पदाम्बुरुहयोर्नेत्रत्विषा पत्रितम् ।
कम्पातीरवनान्तरं विदधती कल्याणजन्मस्थली
काञ्चीमध्यमहामणिर्विजयते काचित्कृपाकन्दली ॥ १० ॥

राकाचन्द्रसमानकान्तिवदना नाकाधिराजस्तुता
मूकानामपि कुर्वती सुरधुनीनीकाशवाग्वैभवम् ।
श्रीकाञ्चीनगरीविहाररसिका शोकापहन्त्री सता-
मेका पुण्यपरम्परा पशुपतेराकारिणी राजते ॥ ११ ॥
जाता शीतलशैलतः सुकृतिनां दृश्या परं देहिनां
लोकानां क्षणमात्रसंस्मरणतः संतापविच्छेदिनी ।
आश्चर्यं बहुखेलनं वितनुते नैश्चल्यमाबिभ्रती
कम्पायास्तटसीम्नि कापि तटिनी कारुण्यपाथोमयी ॥ १२ ॥
ऐक्यं येन विरच्यते हरतनौ दम्भावपुंभावके
रेखा यत्कचसीम्नि शेखरदशां नैशाकरी गाहते ।
औन्नत्यं मुहुरेति येन स महान्मेनासखः सानुमा-
न्कम्पातीरविहारिणा सशरणास्तेनैव धाम्ना वयम् ॥ १३ ॥
अक्ष्णोश्च स्तनयोः श्रिया श्रवणयोर्बाह्वोश्च मूलं स्पृशा-
न्नुत्तंसेन मुखेन च प्रतिदिनं द्रुह्यन्पयोजन्मने ।
माधुर्येण गिरां गतेन मृदुना हंसाङ्गनां ह्रेपय-
न्काञ्चीसीम्नि चकास्ति कोऽपि कवितासंतानबीजाङ्कुरः ॥ १४ ॥
खण्डं चान्द्रमसं वतंसमनिशं काञ्चीपुरे खेलनं
कालायश्छवितस्करीं तनुरुचिं कर्णेजपे लोचने ।

१. 'अहो' इति घ-पाठः. २. हिमालयः. ३. 'मूलस्पृशो' इति सर्वपुस्तकपाठः.

तारुण्योष्मनखंपचस्तनभरं जङ्घास्पृशं कुन्तलं
　　भाग्यं देशिकसंचितं मम कदा संपादयेदम्बिके ॥ १५ ॥

तन्वानं जनकेलिसौधसरणिं नैसर्गिकीणां गिरां
　　केदारं कविमल्लसूक्तिलहरीसस्यश्रियां शाश्वतम् ।
अंहोवञ्चनचुञ्चु किंचन भजे काञ्चीपुरीमण्डनं
　　पर्यायच्छवि पाकशासनमणेः पौष्पेषवं पौरुषम् ॥ १६ ॥

आलोके मुखपङ्कजे च दधती सौधाकरी चातुरीं
　　चूडालंक्रियमाणपङ्कजवनीवैरागमप्रक्रिया ।
मुग्धस्मेरमुखी घनस्तनतटी[1] मूर्छालमध्याञ्चिता
　　काञ्चीसीमनि कामिनी विजयते काचिज्जगन्मोहिनी ॥ १७ ॥

यस्मिन्नम्ब[3] भवत्कटाक्षरजनी मन्देऽपि मन्दस्मित-
　　ज्योत्स्नासंस्नपिता भवत्यभिमुखी तं प्रत्यहो देहिनम्[4] ।
द्राक्षामाक्षिकमाधुरीमदभरव्रीडाकरी वैखरी[5]
　　कामाक्षि स्वयमातनोत्यभिसृतिं वामेक्षणेव क्षणात् ॥ १८ ॥

कालिन्दीजलकान्तयः स्मितरुचिस्वर्वाहिनीपाथसि
　　प्रौढध्वान्तरुचः स्फुटाधरमहालौहित्यसंध्योदये ।
माणिक्योपलकुण्डलांशुशिखिनि व्यामिश्रधूमश्रियः[2]
　　कल्याणैकभुवः कटाक्षसुषमाः कामाक्षि राजन्ति ते ॥ १९ ॥

कलकलरणत्काञ्ची काञ्चीविभूषणमालिका
　　कचभरलसच्चन्द्रा चन्द्रावतंससधर्मिणी ।
कविकुलगिरः श्रावं श्रावं मिलत्पुलकाङ्कुरा
　　विरचितशिरःकम्पा कम्पातटे परिशोभते ॥ २० ॥

सरसवचसां वीची नीचीभवन्मधुमाधुरी
　　भरितभुवना कीर्तिर्मूर्तिर्मनोभवजित्वरी ।

---

१. 'स्तनतट' इति क-ख-ग-पाठः. २. इन्द्रनीलप्रभमिति भाव ३. 'एव' इति क-ख-पाठः. ४. 'देहिनाम्' इति क-ख-पाठ. ५ वाणी.

जननि मनसो योग्यं भोग्यं नृणां तव जायते
कथमिव विना काञ्चीभूषे कटाक्षतरङ्गितम् ॥ २१ ॥
भ्रमरितसरित्पूरे नीलोत्पलप्रभया भया-
नतजनतमःखण्डी तुण्डीरसीम्नि विजृम्भते ।
अचलतपसामेकः पाकः प्रसूनशरासन-
प्रतिभटमनोहारी नारीकुलैकशिखामणिः ॥ २२ ॥
मधुरवचसो मन्दस्मेरा मतङ्गजगामिन-
स्तरुणिमजुषस्तापिच्छाभास्तमःपरिपान्थिनः ।
कुचभरनताः कुर्युर्भद्रं कुरङ्गविलोचनाः
कलितकरुणाः काञ्चीभाजः कपालिमहोत्सवाः ॥ २३ ॥
कमलसुषमाकक्षारोहे विचक्षणवीक्षणाः
कुमुदसुकृतक्रीडाचूडालकुन्तलबन्धुराः ।
रुचिररुचिभिस्तापिच्छश्रीप्रपञ्चनचुञ्चवः
पुरविजयिनः कम्पातीरे स्फुरन्ति मनोरथाः ॥ २४ ॥
कलितरतयः काञ्चीलीलाविधौ कविमण्डली-
वचनलहरीवासन्तीनां वसन्तविभूतयः ।
कुशलविधये भूयासुर्मे कुरङ्गविलोचनाः
कुसुमविशिखारातेरक्ष्णां कुतूहलविभ्रमाः ॥ २५ ॥
कवलिततमःखण्डास्तुण्डीरमण्डलमण्डनाः
सरसिजवनीसंतानानामरुंतुदशेखराः ।
नयनसरणेर्नेदीयांसः कदा नु भवन्ति मे
तरुणजलदश्यामाः शंभोस्तपःफलविभ्रमाः ॥ २६ ॥
अचरमभिषुं दीनं मीनध्वजस्य मुखश्रिया
सरसिजभुवो यानं म्लानं गतेन च मञ्जुना ।
त्रिदशसदसामन्नं खिन्नं गिरा च वितन्वती
तिलकयति सा कम्पातीरं त्रिलोचनसुन्दरी ॥ २७ ॥

१. मीनध्वजस्य प्रथम बाणमरविन्दरूपं मुखश्रिया दीनं वितन्वतीत्यन्वयः. २. हंसम्. ३. पीयूषम्.

जननि भुवने चङ्क्रम्येऽहं कियन्तमनेहसं
कुपुरुषकरभ्रष्टैर्दुष्टैर्धनैरुदरंभरिः ।
तरुणकरुणे तन्द्राशून्ये तरङ्गय लोचने
नमति मयि ते किंचित्काञ्चीपुरीमणिदीपिके ॥ २८ ॥

मुनिजनमनःपेटीरत्नं स्फुरत्करुणानटी-
विहरणकलागेहं काञ्चीपुरीमणिभूषणम् ।
जगति महतो मोहव्याधेर्नृणां परमौषधं
पुरहरदृशां साफल्यं मे पुरः परिजृम्भताम् ॥ २९ ॥

मुनिजनमनोधाम्ने धाम्ने वचोमयजाह्नवी-
हिमगिरितटप्राग्भारायाक्षराय परात्मने ।
विहरणजुषे काञ्चीदेशे महेश्वरलोचन-
त्रितयसरसक्रीडासौधाङ्गणाय नमोनमः ॥ ३० ॥

मरकतरुचां प्रत्यादेशं महेश्वरचक्षुषा-
ममृतलहरीपूरं पारं भवाख्यपयोनिधेः ।
सुचरितफलं काञ्चीभाजो जनस्य पचेलिमं
हिमशिखरिणो वंशस्यैकं वतंसमुपास्महे ॥ ३१ ॥

प्रणमनदिनारम्भे कम्पानदीसखि तावके
सरसकवितोन्मेषः पूषा सतां समुदञ्चितः ।
प्रतिभटमहाप्रौढप्रोद्यत्कवित्वकुमुद्वतीं
नयति तरसा निद्रामुद्रां नगेश्वरकन्यके ॥ ३२ ॥

शमितजडिमारम्भा कम्पातटीनिकटेचरी
निहतदुरितस्तोमा सोमार्धमुद्रितकुन्तला ।
फलितसुमनोवाञ्छा पाञ्चायुधी परदेवता
सफलयतु मे नेत्रे गोत्रेश्वरप्रियनन्दिनी ॥ ३३ ॥

---

१. 'प्राग्भागाय' इति क-ख-ग-पाठः. २. 'अचिराय' इति घ-पाठः. ३. 'उदञ्चति' इति ख-ग-पाठ.. ४. 'तन्द्रामुद्रा' इति घ-पाठः. ५. 'कुन्तली' इति ख-घ-पाठः. ६. हिमालयसुता.

मम तु धिषणा पीड्या जाड्यातिरेकं कथं त्वया
कुमुदसुषमामैत्रीपात्रीवतंसितकुन्तलाम् ।
जगति शमितस्तम्भां कम्पानदीनिलयामसौ
श्रयति हि गलत्तन्द्रा चन्द्रावतंससधर्मिणी ॥ ३४ ॥
परिमलपरीपाकोद्रेकं पयोमुचि काञ्चने
शिखरिणि पुनर्द्वैधीभावं शशिन्यरुणातपम् ।
अपि च जनयन्कम्त्रोर्लक्ष्मीमनम्बुनि कोऽप्यसौ
कुसुमधनुषः काञ्चीदेशे चकास्ति पराक्रमः ॥ ३५ ॥
पुरदमयितुर्वामोत्सङ्गस्थलेन रसज्ञया
सरसकविताभाजां काञ्चीपुरोदरसीमया ।
तटपरिसरैर्नीहाराद्रैर्वचोभिरकृत्रिमैः
किमिव न तुलामस्मच्चेतो महेश्वरि गाहते ॥ ३६ ॥
नयनयुगलीमास्माकीनां कदा नु फलेग्रहीं
विदधति गतौ व्याकुर्वाणा गजेन्द्रचमत्क्रियाम् ।
मरकतरुचो देहे माहेश्वराः स्तननम्रिताः
सुकृतविभवाः प्राञ्चः काञ्चीवतंसधुरंधराः ॥ ३७ ॥
मनसिजयशःपारम्पर्यं मरन्दझरीसुवां
कविकुलगिरां कन्दं कम्पानदीतटमण्डनम् ।
मधुरललितं मत्कं चक्षुर्मनीषिमनोहरं
पुरविजयिनः सर्वस्वं तत्पुरस्कुरुते कदा ॥ ३८ ॥
शिथिलिततमोलीलां नीलारविन्दविलोचनां
दहनविलसत्फालां श्रीकामकोटिमुपास्महे ।
करधृतलसच्छूलां कामारिचित्तमनोहरां
मनसिजकृपालीलां लोलालकामलिकेक्षणाम् ॥ ३९ ॥
कलालीलाशाला कविकुलवचःकैरववनी-
शरज्ज्योत्स्नाधारा शशधरशिशुश्लाघ्यमुकुटी ।

१. 'कालारि' इति क-ख-ग-पाठः.

पुनीते नः कम्पापुलिनतटसौहार्दतरला
कदा चक्षुर्मार्गे कनकगिरिधानुष्कमहिषी ॥ ४० ॥

नमः स्तान्नम्रेभ्यः स्तनगरिमगर्वेण गुरुणा
दधानेभ्यश्चूडाभरणममृतस्यन्दशिशिरम् ।
सदा वास्तव्येभ्यः सविधभुवि कम्पाख्यसरितो
यशोव्यापारेभ्यः सुकृतविभवेभ्यः पशुपतेः ॥ ४१ ॥

असूयन्ती काचिन्मरकतरुचो नाकिमुकुटी-
कदम्बं चुम्बन्ती चरणनखचन्द्रांशुपटलैः ।
तमोमुद्रां विद्रावयतु मम काञ्चीनिलयना
हरोत्सङ्गश्रीमन्मणिगृहमहादीपकलिका ॥ ४२ ॥

अनाद्यन्ता काचित्सुजननयनानन्दजननी
निरुन्धाना कान्तिं निजरुचिविलासैर्जलमुचाम् ।
स्मरारेस्तारल्यं मनसि जनयन्ती स्वयमहो
गलत्कम्पा शम्पा परिलसति कम्पापरिसरे ॥ ४३ ॥

सुधाडिण्डीरश्रीः स्मितरुचिषु तुण्डीरविषयं
परिष्कुर्वाणासौ परिहसितनीलोत्पलरुचिः ।
स्तनाभ्यामानम्रा स्तबकयतु मे काङ्क्षिततरुं
दृशामैशानीनां सुकृतफलपाण्डित्यगरिमा ॥ ४४ ॥

कृपाधाराद्रोणी कृपणधिषणानां प्रणमतां
निहन्त्री संतापं निगममुकुटोत्तंसकलिका ।
परा काञ्चीलीलापरिचयवती पर्वतसुता
गिरां [3]नीवी देवी गिरिशपरतन्त्रा विजयते ॥ ४५ ॥

कवित्वश्रीकन्दा सुकृतपरिपाटी हिमगिरे-
र्विधात्री विश्वेषां विषमशरवीरध्वजपटी ।

---

१. कनकगिरिणा मेरुणा धानुष्को धनुष्मान् शिवः तस्य महिषी. २. 'गतिपने' इति घ-पाठः. ३. मूलधनम्

सखी कम्पानद्याः पदहसितपाथोजयुगली
पुराणी पायान्नः पुरमथनसाम्राज्यपदवी ॥ ४६ ॥

द[1]रिद्राणा मध्ये दरदलिततापिच्छसुषमाः
स्तनाभोगक्लान्तास्तरुणहरिणाङ्काङ्कितकचाः ।
हराधीना नानाविबुधमुकुटीचुम्बितपदाः
कदा कम्पातीरे कथय विहरामो गिरिसुते ॥ ४७ ॥

वरीवर्तु स्थेमा त्वयि मम गिरां देवि मनसो
नरीनर्तु प्रौढा वदनकमले वाक्यलहरी ।
चरीचर्तु प्रज्ञाजननि ज[2]डिमा नः प[3]रजने
सरीसर्तु स्वैरं जननि मयि कामाक्षि करुणा ॥ ४८ ॥

क्षणं ते कामाक्षि भ्रमरसुषमाशिक्षणगुरुः
कटाक्षव्याक्षेपो मम भवतु मोक्षाय विपदाम् ।
नरीनर्तु स्वैरं वचनलहरी निर्जरपुरी-
सरिद्वीचीनीचीकरणपटुरास्ये मम सदा ॥ ४९ ॥

पुरस्तान्मे भूयः प्रशमनपरः स्तान्मम रुजां
प्रचारस्ते कम्पातटविहृतिसंपादिनि दृशोः ।
इमां याच्ञामूरीकुरु सपदि दूरीकुरु तमः-
परीपाकं म[4]त्कं सपदि बुधलोकं च नय माम् ॥ ५० ॥

उदञ्चन्ती काञ्चीनगरनिलये त्वत्करुणया
समृद्धा वाग्धाटी परिहसितमाध्वी कवयताम् ।
उपादत्ते मारप्रतिभटजटाजूटमुकुटी-
कुटीरोल्लासिन्याः शतमखतटिन्या जयपटीम् ॥ ५१ ॥

श्रियं विद्यां दद्याज्जननि नमतां कीर्तिममितां
सुपुत्रं प्रादत्ते तव जननि कामाक्षि करुणा ।

---

१. क्षीणाः. २. 'जडिमानं' इति क-ख-ग-पाठः. ३. शत्रुजने. ४. 'मूक' इति क-ख-ग-पाठः.

त्रिलोक्यामाधिक्यं त्रिपुरपरिपन्थिप्रणयिनि
प्रणामस्त्वत्पादे शमितदुरिते किं न कुरुते ॥ ५२ ॥

मनःस्तम्भं स्तम्भं गमयदुपकम्पं प्रणमतां
सदा लोलं नीलं चिकुरजितलोलम्बनिकरम् ।
गिरां दूरं स्मेरं धृतशशिकिशोरं पशुपते-
र्दृशां भोग्यं योग्यं तुहिनगिरिभाग्यं विजयते ॥ ५३ ॥

घनश्यामान्कामान्तकमहिषि कामाक्षि मधुरा-
न्दृशां पातानेतानमृतजलशीताननुपमान् ।
भवोत्पाते भीते मयि वितर नाथे दृढभव-
न्मनःशोके मूके हिमगिरिपताके करुणया ॥ ५४ ॥

नतानां मन्दानां भवनिगडबन्धाकुलधियां
[1]सदान्ध्यं रुन्धानामभिलषितसंतानलतिकाम् ।
चरन्ती कम्पायास्तटभुवि सवित्री त्रिजगतां
स्मरामस्तां नित्यं स्मरमथनजीवातुकलिकाम् ॥ ५५ ॥

परा विद्या हृद्याश्रितमदनविद्या मरकत-
प्रभानीला लीलापरवशितशूलायुधमनाः ।
तमःपूरं दूरं चरणनतपौरंदरपुरी-
मृगाक्षी कामाक्षी [2]कमलतरलाक्षी नयतु मे ॥ ५६ ॥

अहंताख्या मत्कं कवलयति हा हन्त हरिणी
हठात्संविद्रूपं हरमहिषि सस्याङ्कुरमसौ ।
कटाक्षव्याक्षेपप्रकटहरिपाषाणपटलै-
रिमामुच्चैरुच्चाटय झटिति कामाक्षि कृपया ॥ ५७ ॥

बुधे वा मूके वा तव पतति यस्मिन्क्षणमसौ
कटाक्षः कामाक्षि प्रकटजडिमक्षोद[3]पटिमा ।

१. 'महान्ध्यं' इति क-ख-ग-पाठः. २. कमलो हरिणविशेषः..
इति क-ख-ग-पाठ..

कथंकारं नास्मै करमुकुलचूडालमुकुटा
नमोवाकं ब्रूयुर्नमुचिपरिपन्थिप्रभृतयः ॥ ५८ ॥
प्रतीचीं पश्यामः प्रकटरुचिनीवारकोणिश-
प्रभासध्रीचीनां प्रदलितषडाधारकमलाम् ।
चरन्तीं सौषुम्णे पथि परपदेन्दुप्रविगल-
त्सुधार्द्रां कामाक्षीं परिणतपरज्योतिरुदयाम् ॥ ५९ ॥
जम्भारातिप्रभृतिमुकुटीः पादयोः पीठयन्ती
गुम्फान्वाचां कविजनकृतान्स्वैरमारामयन्ती ।
शम्पालक्ष्मीं मणिगणरुचापाटलैः प्रापयन्ती
कम्पातीरे कविपरिषदां जृम्भते भाग्यसीमा ॥ ६० ॥
चन्द्रापीडां चतुरवदनां चञ्चलापाङ्गलीलां
कुन्दस्मेरां कुचभरनतां कुन्तलोद्धूतभृङ्गाम् ।
मारारातेर्मदनशिखिनं मांसलं दीपयन्तीं
कामाक्षीं तां कविकुलगिरां कल्पवल्लीमुपासे ॥ ६१ ॥
कालाम्भोदप्रकरसुषमां कान्तिभिस्तर्जयन्ती
कल्याणानामुदयसरणिः कल्पवल्ली कवीनाम् ।
कंदर्पारेः प्रियसहचरी कल्मषाणां निहन्त्री
काञ्चीदेशं तिलकयति सा कापि कारुण्यसीमा ॥ ६२ ॥
ऊरीकुर्वन्नुरसिजतटे चातुरीं भूधराणां
पाथोजानां नयनयुगले पारिपन्थ्यं वितन्वन् ।
कम्पातीरे विहरति रुचा मोघयन्मेघशैलीं
कोकद्वेषं शिरसि कलयन्कोऽपि विद्याविशेषः ॥ ६३ ॥
काञ्चीलीलापरिचयवती कापि तापिच्छलक्ष्मी-
र्जाड्यारण्ये हुतवहशिखा जन्मभूमिः कृपायाः ।
माकन्दश्रीमधुरकविताचातुरीकोकिलानां
मार्गे भूयान्मम नयनयोर्मान्मथी कापि विद्या ॥ ६४ ॥

१. इन्द्राद्याः कथं न नमस्कुर्युः. २. 'नीयारकमणि' इति घ-पाठः.

सेतुर्मातर्मरकतमयो भक्तिभाजां भवाब्धौ
लीलालोला कुवलयमयी मान्मथी वैजयन्ती ।
काञ्चीभूषा पशुपतिदृशां कापि कालाञ्जनाली
मत्कं दुःखं शिथिलयतु ते मञ्जुलापाङ्गमाला ॥ ६५ ॥

व्यावृण्वानाः कुवलयदलप्रक्रियावैरमुद्रां
व्याकुर्वाणा मनसिजमहाराजसाम्राज्यलक्ष्मीम् ।
काञ्चीलीलाविहृतिरसिके काङ्क्षितं नः क्रियामु-
र्वन्धच्छेदे तव नियमिनां बद्धदीक्षाः कटाक्षाः ॥ ६६ ॥

कालाम्भोदे शशिरुचि दलं कैतकं दर्शयन्ती
मध्येसौदामनि मधुलिहां मालिकां राजयन्ती ।
हंसारावं विकचकमले मञ्जुमुल्लासयन्ती
कम्पातीरे विलसति नवा कापि कारुण्यलक्ष्मीः ॥ ६७ ॥

चित्रं चित्रं निजमृदुतया भर्त्सयन्पल्लवालीं
पुंसां कामान्भुवि च नियतं पूरयन्पुण्यभाजाम् ।
जातः शैलान्न तु जलनिधेः स्वैरसंचारशीली
काञ्चीभूषा कलयतु शिवं कोऽपि चिन्तामणिर्मे ॥ ६८ ॥

ताम्राम्भोजं जलदनिकटे तत्र बन्धूकपुष्पं
तस्मिन्मल्लीकुसुमसुषमां तत्र वीणानिनादम् ।
व्यावृण्वाना सुकृतलहरी कापि काञ्चीनगर्या-
मैशानी सा कलयतितरामैन्द्रजालं विलासम् ॥ ६९ ॥

आहारांशं[1] त्रिदशसदसामाश्रये[2] चातकाना-
माकाशोपर्यपि[3] च कलयन्नालयं तुङ्गमेषाम् ।
कम्पातीरे विहरतितरां कामधेनुः कवीनां
मन्दस्मेरो मदननिगमप्रक्रियासंप्रदायः ॥ ७० ॥

१. चन्द्रकला. २ चातकानामाश्रये मेघे, अर्थात्केशपाशे. ३. आकाशशब्देन मध्यभागो लक्ष्यते. तदुपरि एषां त्रिदशानां तुङ्गमालयं मेरुम्, अथात्स्तनद्वन्द्वम्.

आर्द्रीभूतैरविरलकृपैरात्तलीलाविलासै-
रास्थापूर्णैरधिकचपलैरञ्चिताम्भोजशिल्पैः ।
कान्तैर्लक्ष्मीललितभवनैः कान्तिकैवल्यसारैः
काश्मल्यं नः कवलयतु सा कामकोटी कटाक्षैः ॥ ७१ ॥

आधुन्वन्त्यै तरलनयनैराङ्गजीं वैजयन्ती-
मानन्दिन्यै निजपदजुपामात्तकाञ्चीपुरायै ।
आस्माकीनं हृदयमखिलैरागमानां प्रपञ्चै-
राराध्यायै स्पृहयतितरामादिमायै जनन्यै ॥ ७२ ॥

दूरं वाचां त्रिदशसदसां दुःखसिन्धोस्तारित्रं
मोहक्ष्वेडक्षितिरुहवने तीक्ष्णधारं कुठारम् ।
कम्पातीरे प्रणयिकविभिर्वर्णितोद्यच्चरित्रं
शान्त्यै सेवे सकलविपदां शांकरं तत्कलत्रम् ॥ ७३ ॥

खण्डीकृत्य प्रकृतिकुटिलं कल्मषं प्रातिभश्री-
शुण्डीरत्वं[1] निजपदजुपां शून्यतन्द्रं दिशन्ती ।
तुण्डीराख्ये महति विषये स्वर्णवृष्टिप्रदात्री
चण्डी देवी कलयति रतिं चन्द्रचूडालचूली[2] ॥ ७४ ॥

येन ख्यातो भवति स गृही पूरुषो मेरुधन्वा
यद्दृक्कोणे मदननिगमप्राभवं बोभवीति ।
यत्प्रीत्यैव त्रिजगदधिपो जृम्भते किंपचानः
कम्पातीरे स जयति महान्काश्चिदोजोविशेषः ॥ ७५ ॥

धन्या धन्या गतिरिह गिरां देवि कामाक्षि कामं
निन्द्यां भिन्द्यात्सपदि जडतां कल्मषादुन्मिषन्तीम् ।
साध्वी माध्वीरसमधुरताभञ्जनी मञ्जुरीति-
र्वाणीवेणी झटिति वृणुतात्स्वर्धुनीस्पर्धिनी माम् ॥ ७६ ॥

---

१. शौण्डीर्यम्. शौर्यमिति यावत्. २. चन्द्रेण चूडाला सशेखरा चूली केशपाशो यस्याः.

यस्या वाटी हृदयकमलं कौसुमी योगभाजां
यस्याः पीठी सततशिशिरा शीकरैर्माकरन्दैः ।
यस्याः पेटी [1]श्रुतिपरिचलन्मौलिरत्नस्य काञ्ची
सा मे सोमाभरणमहिषी साधयेत्काङ्क्षितानि ॥ ७७ ॥

एका माता सकलजगतामीयुषी ध्यानमुद्रा-
मेकाम्राधीश्वरचरणयोरेकताना समिन्धे ।
ताटङ्कोद्यन्मणिगणरुचाताम्रकर्णप्रदेशा
तारुण्यश्रीस्तबकितरुचा तापसी कापि बाला ॥ ७८ ॥

दन्तादन्तिप्रकटनकरी दन्तिभिर्मन्दयानै-
र्मन्दाराणां मदपरिणतिं मथ्नती मन्दहासैः ।
अङ्कूराभ्यां [2]मनसिजतरोरङ्कितोराः कुचाभ्या-
मन्तःकाञ्चि स्फुरति जगतामादिमा कापि माता ॥ ७९ ॥

त्रियम्बककुटुम्बिनीं त्रिपुरसुन्दरीमिन्दिरां
पुलिन्दपतिसुन्दरीं त्रिपुरभैरवीं भारतीम् ।
मतङ्गकुलनायिकां महिषमर्दिनीं मातृकां
भणन्ति विबुधोत्तमा विहृतिमेव कामाक्षि ते ॥ ८० ॥

महामुनिमनोनटी महितरम्यकम्पातटी-
कुटीरकविहारिणी कुटिलबोधसंहारिणी ।
सदा भवतु कामिनी सकलदेहिनां स्वामिनी
कृपातिशयकिंकरी मम विभूतये शांकरी ॥ ८१ ॥

[3]जडाः प्रकृतिनिर्धना जनविलोचनारुंतुदा
नरा जननि वीक्षणं क्षणमवाप्य कामाक्षि ते ।
वचःसु मधुमाधुरीं प्रकटयन्ति पौरंदरी-
विभूतिषु विडम्बनां वपुषि [4]मान्मथीं प्रक्रियाम् ॥ ८२ ॥

---

१. 'श्रुतिचरदुरोमौलि' इति क-ख-पाठः. २. 'मनसिजरिपो' इति क-ग-घ-पाठ.
३. 'जना.' इति घ-पाठः. ४. 'मन्मथप्रक्रियाम्' इति क-ख-पाठ..

घनस्तनतटस्फुटस्फुरितकञ्चुली चञ्चली-
कृतत्रिपुरशासना सुजनशीलितोपासना ।
दृशोः सरणिमश्नुते मम कदा नु काञ्चीपुरे
परा परमयोगिनां मनसि चित्कला पुष्कला ॥ ८३ ॥

कवीन्द्रहृदयेचरी परिगृहीतकाञ्चीपुरी
निरूढकरुणाझरी निखिललोकरक्षाकरी ।
मनःपथदवीयसी मदनशासनप्रेयसी
महागुणगरीयसी मम दृशोऽस्तु नेदीयसी ॥ ८४ ॥

धनेन न रमामहे खलजनान्न सेवामहे
न चापलमयामहे भवभयान्न दूयामहे ।
स्थिरां तनुमहे तरां मनसि किं च काञ्चीरत-
स्मरान्तककुटुम्बिनीचरणपल्लवोपासनाम् ॥ ८५ ॥

सुराः परिजना वपुर्मनसिजाय वैरायते
त्रिविष्टपनितम्बिनीकुचतटी च केलीगिरिः ।
गिरः सुरभयो वयस्तरुणिमा दरिद्रस्य वा
कटाक्षसरणौ क्षणं निपतितस्य कामाक्षि ते ॥ ८६ ॥

पवित्रय जगत्त्रयीविबुधबोधजीवातुभिः
पुरत्रयविमर्दिनः[1] पुलककञ्चुलीदायिभिः ।
भवक्षयविचक्षणैर्व्यसनमोक्षणैर्वीक्षणै-
र्निरक्षरशिरोमणिं[2] करुणयैव कामाक्षि माम् ॥ ८७ ॥

कदा कलितखेलनाः करुणयैव काञ्चीपुरे
कलायमुकुलत्विषः[3] शुभकदम्बपूर्वाङ्कुराः ।
पयोधरभरालसाः कविजनेषु ते बन्धुराः
पचेलिमकृपारसाः परिपतन्ति मार्गे दृशोः ॥ ८८ ॥

---

१. 'मर्दिने' इति क-ख-पाठः. २. 'निरीक्षणशिरोमणे' इति घ-पाठः. ३. कलायो धान्यविशेषः. तत्पुष्प नीलवर्णं भवति. 'कलापिमुकुटत्विष. शुभकदम्बपूर्णाङ्कुराः' इति घ-पाठः.

अक्षोभ्यमचलोद्भवं हृदयनन्दनं देहिना-
मनर्घमधिकाञ्चि तत्किमपि रत्नमुद्द्योतते ।
अनेन समलंकृता जयति शंकराङ्कस्थली
कदास्य मम मानसं व्रजति पेटिकाविभ्रमम् ॥ ८९ ॥

परामृतझराप्लुता जगति नित्यमन्तश्चरी
नृणामपि बहिश्चरी परमसंविदेकात्मिका ।
महद्भिरपरोक्षिता सततमेव काञ्चीपुरे
ममान्वहमहंमतिर्मनसि भातु माहेश्वरी ॥ ९० ॥

त्वमेव सति चण्डिका त्वमिह देवि चामुण्डिका
त्वमेव परमातृका त्वमपि योगिनीरूपिणी ।
त्वमेव किल शांभवी त्वमपि कामकोटी जया
त्वमेव विजया त्वयि त्रिजगदम्ब किं ब्रूमहे ॥ ९१ ॥

परे जननि पार्वति प्रणतपालिनि प्रातिभ-
प्रदात्रि परमेश्वरि त्रिजगदाश्रिते शाश्वति ।
त्रियम्बककुटुम्बिनि त्रिपदसङ्गिनि त्रीक्षणे
त्रिशक्तिमयि वीक्षणं मयि निधेहि कामाक्षि ते ॥ ९२ ॥

मनोमधुकरोत्सवं विदधती मनीषाजुषां
स्वयंप्रभववैखरीविपिनवेदिकालम्बिनी ।
अहो शिशिरिता कृपामधुरसेन कम्पातटे
चराचरविधायिनी चरति कापि चिन्मञ्जरी ॥ ९३ ॥

कलावति कलाभृतो मुकुटसीम्नि लीलावति
स्पृहावति महेश्वरे भुवनमोहने भास्वति ।
प्रभावति रमे सदा महितरूपशोभावति
त्वरावति परे सतां गुरुकृपाम्बुधारावति ॥ ९४ ॥

---

१. वेदारण्यविहारिणी.

त्वयैव जगदम्बया भुवनमण्डली सूयते
त्वयैव करुणार्द्रया[1] तदपि रक्षणं नीयते ।
त्वयैव खरकोपया नयनपावके हूयते
त्वयैव किल नित्यया जगति संततं स्थीयते ॥ ९५ ॥

चराचरजगन्मयीं सकलहृन्मयीं चिन्मयीं
गुणत्रयमयीं जगत्त्रयमयीं त्रिधामामयीम् ।
परापरमयीं सदा दशदिशां निशाहर्मयीं
परां सततसन्मयीं परमचिन्मयीं शीलये ॥ ९६ ॥

जय जगदम्बिके हरकुटुम्बिनि नेत्ररुचा
जितशरदम्बुजे घनविडम्बिनि केशरुचा ।
परमवलम्बनं कुरु सदा पररूपधरे[2]
मम गतसंविदो जडिमडम्बरताण्डविनः ॥ ९७ ॥

भुवनजननि भूषाभूतचन्द्रे नमस्ते
कलुषशमनि कम्पातीरगेहे नमस्ते ।
निखिलनिगमवेद्ये नित्यरूपे नमस्ते
परशिवमयि पाशच्छेदहस्ते नमस्ते ॥ ९८ ॥

मनोविपिनधाविनं[3] सततमेव काञ्चीपुरे
विहाररसिका परा परमसंविदुर्वीरुहे ।
कटाक्षनिगडैर्दृढं हृदयदुष्टदन्तावलं
चिरं नयतु मामकं त्रिपुरवैरिसीमन्तिनी ॥ ९९ ॥

क्वणत्काञ्ची काञ्चीपुरमणिविपञ्चीलयझरी-
शिरःकम्पा कम्पावसतिरनुकम्पाजलनिधिः ।
घनश्यामा श्यामा कठिनकुचसीमा मनसि मे
मृगाक्षी कामाक्षी हरनटनसाक्षी विहरताम् ॥ १०० ॥

---

१. 'करुणानिधे' इति घ-पाठः. २. 'सुररूप' इति घ-पाठः. ३. अयमग्रिमश्च श्लोकः क-घ-पुस्तकयोर्नास्ति.

इमं परवरप्रदं प्रकृतिपेशलं पावनं
परापरचिदाकृतिप्रकटनप्रदीपायितम् ।
स्तवं पठति नित्यदा मनसि भावयन्नम्बिकां
जपैरलमलं मखैरधिकदेहसंशोषणैः ॥ १०१ ॥

इति श्रीमूककविसार्वभौमकृतौ पञ्चशत्या स्तुतिशतकम् ।

(समाप्तेयं मूकपञ्चशती ।)

---

महाकविश्रीक्षेमेन्द्रकृतः

# चतुर्वर्गसंग्रहः ।

प्रथमः परिच्छेदः ।

सत्यस्कन्धस्तरुणकरुणापूतपीयूषसिक्तः
क्षान्तिच्छायः शुभमतिलतालंकृतः शीलमूलः ।
भूयात्सत्त्वप्रसवविलसत्पल्लवः पुण्यभाजां
धर्मः प्रोद्यत्कुशलकुसुमः श्रीफलो मङ्गलाय ॥ १ ॥

उपदेशाय शिष्याणां संतोषाय मनीषिणाम् ।
क्षेमेन्द्रेण निजश्लोकैः क्रियते वर्गसंग्रहः ॥ २ ॥

धर्मः शर्म परत्र चेह च नृणां धर्मोऽन्धकारे रविः
सर्वापत्प्रशमक्षमः सुमनसां धर्माभिधानो निधिः ।
धर्मो बन्धुरबान्धवे पृथुपथे धर्मः सुहृन्निश्चलः
संसारोरुमरुस्थले सुरतरुर्नास्त्येव धर्मात्परः ॥ ३ ॥

कर्णे धर्मकथा मुखे परिचितं धर्माभिरामं वच-
श्चित्ते धर्ममनोरथः प्रणयिनी सर्वत्र धर्मस्थितिः ।
काये धर्ममयी क्रिया परिकरः सोऽयं शुभप्राप्तये
कल्पापायपदेऽप्युपप्लवलवैरस्पृष्टवेलाफलः ॥ ४ ॥

निन्द्यं जन्म प्रमोहस्थिरतरतमसां यन्मनुष्यत्वहीनं
बुद्ध्या हीनो मनुष्यः शुभफलविकलस्तुल्यचेष्टः पशूनाम् ।

बुद्धिः पाण्डित्यहीना भ्रमति सदसतोस्तत्त्वचर्चाविचारे
पाण्डित्यं धर्महीनं शुकसदृशगिरां निष्फलक्लेशमेव ॥ ५ ॥

पाण्डित्यं यन्मदान्धानां परोत्कर्षविनाशनम्।
मात्सर्यपांसुपूरेण मातङ्गस्नानमेव तत् ॥ ६ ॥

तत्प्राज्ञत्वं हरति विमलं येन शीलं न काम-
स्तद्धीरत्वं प्रशमवशतां यान्ति येनेन्द्रियाणि।
तद्वैदग्ध्यं भुवनजयिनी वञ्च्यते येन माया
तत्पाण्डित्यं भवपरिभवः शान्तिमायाति येन ॥ ७ ॥

अन्धः स एव श्रुतवर्जितो यः शठः स एवार्थिनिरर्थको यः।
मृतः स एवास्ति यशो न यस्य धर्मे न धीर्यस्य स एव शोच्यः ॥ ८ ॥

हितं न किंचिद्विहितं परस्य दत्तं न वित्तं न च सत्यमुक्तम्।
यस्मिन्दिने निष्फलतां प्रयातमायुः स कालः परिदेवनस्य ॥ ९ ॥

न दानतुल्यं धनमन्यदस्ति न सत्यतुल्यं व्रतमन्यदस्ति।
न शीलतुल्यं शुभमन्यदस्ति न क्षान्तितुल्यं हितमन्यदस्ति ॥ १० ॥

सत्यं वाचि दृशि प्रसादमयता सर्वाशयाश्वासिनी
पाणौ दानविमुक्तिरात्मजननक्लेशान्तिचिन्ता मतौ।
संसक्ता हृदये दयैव दयिता कार्ये परार्थोद्यमो
यस्यैकः पुरुषः स जीवति भवे भ्राम्यन्त्यजीवाः परे ॥ ११ ॥

परप्राणत्राणप्रणिहितधियां धर्मजननी
दयैवैका लोके सकलजनताजीवितसुधा।
असामान्यं पुण्यं मुनिभिरुदितं ज्ञाननयनै-
रहिंसा संसारे स्वपरकुशलश्लाघ्यसरणिः ॥ १२ ॥

प्राणानां परिरक्षणाय सततं सर्वाः क्रियाः प्राणिनां
प्राणेभ्योऽप्यधिकं समस्तजगतां नास्त्येव किंचित्प्रियम्।

---

१. 'श्रुतिवर्जितः' इति पाठः. २. 'दानविमुक्तता जनमनः—' इति पाठः. ३. 'काले' इति पाठः.

पुण्यं तस्य न शक्यते गणयितुं यः पूर्णकारुण्यवा-
न्प्राणानामभयं ददाति सुकृती तेषामहिंसाव्रतः ॥ १३ ॥
स एव सत्त्वाभरणप्रभावभूर्भुवः प्रकामाभरणं नरोत्तमः ।
मुखाम्बुजे यस्य वसत्यनत्यया सदैव सत्याभरणा सरस्वती ॥ १४ ॥
क्लिन्नं कोषनिषण्णमर्थिविफलं शल्यायते यत्परं
वित्तं क्लेशनिमित्तमेव मलिनं यातु स्वयं तत्क्षयम् ।
यत्कारुण्यपरोपकारविकलं भूभारभूतं वपुः
स्वार्थासक्तमनर्थसार्थसदनं मा मास्तु तत्कस्यचित् ॥ १५ ॥
वन्द्यः स पुंसां त्रिदशाभिवन्द्यः कारुण्यपुण्योपचयक्रियाभिः ।
संसारसारत्वमुपैति यस्य परोपकाराभरणं शरीरम् ॥ १६ ॥
परद्रविणनिस्पृहः परकलत्रनिष्कौतुकः
परप्रणयवत्सलः परनिकारबद्धक्षमः ।
परस्तुतिविशारदः परगुणापवादोज्झितः
परार्तिहरणोद्यतो भवति भूरिपुण्यैर्नरः ॥ १७ ॥
पद्मानामिव सा सतां सगुणता या संश्रयार्हा श्रियः
सा श्रीर्भद्रगजेन्द्रमूर्तिरिव या दानेन विभ्राजते ।
तद्दानं नवचन्द्रवद्यदनिशं मानेन संपूर्यते
मानोऽसौ तृणवन्न यः परिचयम्लानः शनैः शुष्यति ॥ १८ ॥
लक्ष्मीर्दानफला श्रुतं शमफलं पाणिः सुरार्चाफल-
श्चेष्टा धर्मफला परार्तिहरणक्रीडाफलं जीवितम् ।
वाणी सत्यफला जगत्सुखफलस्फीता प्रभावोन्नति-
र्भव्यानां भवशान्तिचिन्तनफला भूत्यै भवत्येव धीः ॥ १९ ॥
शीलं शीलयतां कुलं कलयतां सद्भावमभ्यस्यतां
व्याजं वर्जयतां गुणं गणयतां धर्मे धियं बध्नताम् ।
[illegible]न्तिं चिन्तयतां तमः शमयतां तत्त्वश्रुतिं शृण्वतां
संसारे न परोपकारसदृशं पश्यामि पुण्यं सताम् ॥ २० ॥

. 'चय' क्रियाभिः' इति पाठः.

तीर्थानि दीर्घाध्वपरिश्रमाणि वहुव्ययानि क्रतुडम्बराणि।
तपांसि मुक्त्वा तनुशोपणानि हिंसाविरामे रमतां मतिर्वः॥ २१॥

यज्वा विप्रः शुचिरनुचरः संयतात्मा तपस्वी
मन्त्री विद्वानवनिवनिताभूषणं भूमिपालः।
धर्मोद्याने सुकृतसलिलासारसंसिच्यमाने
पूर्णः सोऽयं कृतयुगतरोर्भाविनो बीजवापः॥ २२॥

दम्भेन शीलव्रतमस्पृहत्वं विरक्तता श्रोत्रियता मृदुत्वम्।
एतानि मूलानि निगूढगूढकौटिल्यलीनानि कलिद्रुमस्य॥ २३॥

यावन्ति दानानि वदन्ति सन्तस्तपांसि तीर्थानि च यानि सन्ति।
तत्पुण्यमेकत्र विभाति सर्वं महार्हमेकत्र च निःस्पृहत्वम्॥ २४॥

सतामदैन्यं वदनस्य शोभा निर्लोभतान्तर्वचसामयाच्ञा।
कायस्य सत्सेव्यमसेवकत्वं पाणेरनुत्तानतलत्वमेव॥ २५॥

मान्यः कुलीनः कुलजात्कलावान्विद्वान्कलाज्ञाद्विदुपः सुशीलः।
धनी सुशीलाद्धनिनोऽपि दाता दातुर्जिता कीर्तिरयाचकेन॥ २६॥

तप्तैस्तीव्रव्रतैः किं विकसति करुणास्यन्दिनी यद्यहिंसा
किं दूरैस्तीर्थसारैर्यदि शमविमलं मानसं सत्यपूतम्।
यत्नादन्योपकारे प्रसरति यदि धीर्दानपुण्यैः किमन्यैः
किं मोक्षोपाययोगैर्यदि शुचिमनसामच्युते भक्तिरस्ति॥ २७॥

इति धर्मप्रशंसा नाम प्रथमः परिच्छेदः।

---

द्वितीयः परिच्छेदः।

प्रधानधाम्नां निधये धनाय नमोऽस्तु तस्मै गुणिनोऽपि यत्नात्।
यदाशया निर्गुणभूपतीनामग्रे गुणान्पण्यदशां नयन्ति॥ १॥

दानादिधर्मः क्रियते धनेन धनेन धन्या धनमाप्नुवन्ति।
धनैर्विना कामकथापि नास्ति त्रिवर्गमूलं धनमेव नान्यत्॥ २॥

यत्क्लीबैर्भटकुक्कुटोत्कटरणक्रीडा समादिश्यते
यन्मूर्खैः सुखलीलया कविशुकालापश्चिरं चर्व्यते।

नीचैरुच्चतरश्च सेवकहयः स्वाम्येन यद्वाह्यते
तद्वित्तस्य विलासनृत्तवसतेरुद्वृत्तवृत्तायितम् ॥ ३ ॥

पूजा धनेनैव न सत्कुलेन कीर्तिर्धनेनैव न विक्रमेण ।
रूपं धनेनैव न यौवनेन क्रिया धनेनैव न जीवितेन ॥ ४ ॥

वृद्धाः प्रसिद्धा विबुधा विदग्धाः शूराः श्रुतिज्ञाः कवयः कुलीनाः ।
विलोकयन्तः सधनस्य वक्त्रं जयेति जीवेति सदा वदन्ति ॥ ५ ॥

ऋद्ध्या युतं निश्चलपक्ष्मनेत्रं मौनान्वितं देवमिवाकुलीनम् ।
दीनः कुलीनः प्रणमन्कुलीनः कृताञ्जलिः स्तौति धनाभिकामः ॥ ६ ॥

तस्मादलब्धद्रविणस्य लाभे लब्धस्य रक्षानियमे यतेत ।
संरक्षमाणस्य सदा विवृद्धौ वृद्धस्य च स्थानविभागसर्गे ॥ ७ ॥ (युग्मम्)

धर्माधानोऽशशिशुचियमः प्रेयसीमित्रबन्धु-
स्थानोत्साहोपचयविजयप्राणविद्याकलाप्तौ ।
श्लाघ्ये देहप्रशमसमये निर्विवादे विभागे
वित्तत्यागे न भवति सतां ग्रन्थिबन्धानुबन्धः ॥ ८ ॥

गोष्ठीविटैश्चारणचक्रचर्या वेश्यारतिः साधुविशेषगन्धः ।
स्पर्धा सुवेषैर्निजवृत्तिलज्जा प्रधानमेतन्निधन धनानाम् ॥ ९ ॥

जाया शीलविवर्जिता व्ययवती मायानिकायः सुहृ-
द्दुष्पूरो गुरुरर्थभोगनिचयैर्बन्धुर्दरिद्रः शठः ।
दासश्चौर्यपरोऽलसश्च कुपदे पुत्रः खलैः पातितः
सोऽयं क्लेशशताप्तसंचयनिधेः प्रत्यक्षलब्धः क्षयः ॥ १० ॥

दाक्ष्यं वित्तस्य मूलं सुनयपरिचयः संपदुद्यानसेकः
प्रागल्भ्यं रत्नवर्षि व्यसनवनसमुन्मूलनं संयतत्वम् ।
श्रीरक्षा मन्त्रगुप्तिर्विपदुपशमनं वर्जनं दुर्जनाना-
मालस्यं मानवानां धनवननलिनासह्यभारस्तुषारः ॥ ११ ॥

हिमासहत्वं रवितापभीतिः कथामतिर्मार्गजनप्रतीक्षा ।
लज्जाभिमानः क्षणसंमुखत्वं नक्षत्रचर्चा च धनस्य विघ्नाः ॥ १२ ॥

वेषः परिक्लेशविशेषचिन्ता परोपरोधः स्ववशावलेपः ।
नदीफलानामिव शीघ्रगानां हानिर्धनानां ग्रहणे विलम्बः ॥ १३ ॥

गुरुगणकैरबुधानां क्षयचतुरैश्चौरमूषकैर्वणिजाम् ।
कायस्थगायनगणैर्भूमिभुजां भुज्यते लक्ष्मीः ॥ १४ ॥

दारिद्र्येण कुलं मदेन कुशलं द्वेषेण विद्याफलं
शीलं दुर्जनसंगमेन मलिनाचारेण शुक्लं यशः ।
आलस्येन धनं प्रयाति निधनं लौल्येन मानोन्नति-
र्याच्ञादैन्यपरिग्रहेण च गुणग्रामः समग्रो नृणाम् ॥ १५ ॥

मौग्ध्यान्मृगार्थी रघुनन्दनोऽपि बाणः प्रमादाद्बलिरार्जवेन ।
नलः कुसङ्गेन ययातिजश्च क्लेशासहत्वाद्व्यसनान्यवापुः ॥ १६ ॥

मौग्ध्यं प्रमादोऽविश्वासः कुसङ्गः क्लेशभीरुता ।
पञ्च संकोचदा दोषाः पद्मिन्या इव संपदः ॥ १७ ॥

कुभूपकूपान्तरलम्बनाप्तवित्तानि रन्ध्रैर्घटसंनिभानाम् ।
असंवृतैरिन्द्रियनामधेयैः पुंसां पयांसीव परिस्रवन्ति ॥ १८ ॥

सास्वादे नवसौरभे मधुलिहां पद्मोदरे बन्धनं
दीपे रूपरताः प्रयान्ति सततापातात्पतङ्गाः क्षयम् ।
गीतेनैव मृगाः पतन्ति करिणीस्पर्शेन नीता गजा-
स्तस्मादिन्द्रियसक्तिरेव सहसा पुंसां विपद्दूतिका ॥ १९ ॥

कुलं कुवृत्त्या कलुषीकृतं तैः कृतो गुणौघस्तृणतुल्यमूल्यः ।
मानस्य मूले निहितः कुठारः प्राप्तं न वित्तं परिरक्षितं यैः ॥ २० ॥

जातः सत्कुलजः स नीचविनयी सेवावमानैरध-
स्तस्योग्रं पतितः स्वमानयशसोर्द्रोहेण शापानलः ।
तेनास्वस्तिमता स्वहस्तनिहितं याच्ञाविषं भक्षितं
वित्तं येन न रक्षितं रिपुमुखं तेन स्थितं वीक्षितुम् ॥ २१ ॥

धावन्सेवितुमेति साधुरधमं वन्ध्यस्ततो यात्यसौ
नीता मूल्यतुलां गुणाश्च गुणिभिः कश्चिन्न गृह्णाति तान् ।

याच्ञा मानमहाशनिर्धनकृता प्राप्तं न किंचित्तया
कि किं वा न विधीयते धनधिया धन्यः स यस्यास्ति तत् ॥ २२॥

विद्याकलापरिचयः क्षितिपालसेवा
दिग्द्वीपमार्गगिरिसंभ्रमणप्रयासः ।
युद्धक्रियाश्च भुवि भोजनलाभलोभा-
त्तद्वित्तलभ्यमिति वित्तवतां प्रवादः ॥ २३ ॥

तावद्धर्मकथा मनोभवरुचिर्मोक्षस्पृहा जायते
यावत्तृप्तिसुखोदयेन न जनः क्षुत्क्षामकुक्षिः क्षणम् ।
प्राप्ते भोजनचिन्तनस्य समये वित्तं निमित्तं विना
धर्मे कस्य धियः स्मरं स्मरति कः केनेक्ष्यते मोक्षभूः॥ २४ ॥

अर्थाकृष्टिं विधातुं कटुरटनपटुर्दाम्भिकः श्रीजडानां
जानात्यन्यासहिष्णुर्वितथनिजगुणस्तोत्रपाठेष्वलज्जः ।
आर्यः कुर्यान्न सेवां कुलविनयगुणैस्तेन मूकोऽर्थनायां
तीक्ष्णानां मार्गणानां भवति हि पुरतः क्ष्मापतेर्लक्षलाभः ॥ २५ ॥

इत्यर्थप्रशसा नाम द्वितीयः परिच्छेदः ।

---

तृतीयः परिच्छेदः ।

ललितललनालीलोदञ्चद्विलोलविलोचनो-
त्पलवनरुचां चञ्चन्तीनां चयैरिव चर्चिता ।
सुरभिसुहृदः पक्षच्छायावृतेव च षट्पदैः
कुसुमधनुषः श्यामा मूर्तिस्तनोतु सुखानि वः ॥ १ ॥

भ्रमद्भ्रमरकेतकीविकसदेकपत्रप्रभाः
सनीलमणिनायका इव विमुक्तमुक्तालताः ।
दृशः शशिकला इव प्रचितपक्ष्मलेशाङ्किता
जयन्ति हरिणीदृशाममृतकालकूटच्छटाः ॥ २ ॥

क्रतुं धनानां फलमग्र्यमाहुः फलं क्रतूनामविवादि पुण्यम् ।
पुण्यस्य पूर्णं फलमिन्द्रलोको द्विरष्टवर्षाः स्त्रिय एव नाकः ॥ ३ ॥

एताः सन्ति वधूविलासकुटिला भ्रूकार्मुकश्रेणयः
कर्णान्तायतपातिनश्च तरुणीनेत्रत्रिभागेषवः ।
निर्दग्धोऽन्धकवैरिणा नवमनःक्षोभाभियोगोद्भवा-
त्संरम्भादविचार्य केवलमसौ मिथ्या तपस्वी स्मरः ॥ ४ ॥

लज्जावक्रो मनसिजधनुर्भ्रूविलासेन तन्व्या-
श्चिन्तापाण्डुः स्पृशति कृशतां वक्रकान्त्या शशाङ्कः ।
यात्येवाधः प्रहसितरुचिर्दोर्लताभ्यां मृणाली
क्लीवं धत्ते कुवलयकुलं कालिमानं कटाक्षैः ॥ ५ ॥

अयोमयानां हृदयेषु तेषां कोऽप्यस्ति नूनं कुलिशोपदेशः ।
सोढानि यैः प्रौढविलासिनीनां कर्णान्तमुक्तानि विलोचनानि ॥ ६ ॥

कुवलयमयी लोलापाङ्गे तरङ्गमयी भ्रुवोः
शशिशतमयी वक्त्रे गात्रे मृणाललतामयी ।
मलयजमयी स्पर्शे तन्वी तुषारमयी स्मिते
दिशति विषमं स्मृत्या तापं किमग्निमयीव सा ॥ ७ ॥

स्मरशरनिशिताक्ष्याः कम्पयन्ते न केषां
कुरव इव कटाक्षाः प्रौढशल्या मनांसि ।
भुवनजनजिगीषोत्साहयोगाय येषा-
मधिचपलतराणां निश्चला कर्णमैत्री ॥ ८ ॥

स्तनस्थली हारिणि सुन्दरीणां नितम्बबिम्बे रशनासनाथे ।
धत्ते विशेषाभरणाभिमानलीलानवोल्लेखलिपिप्रपञ्चम् ॥ ९ ॥

कान्ताया विलसद्विलासहसितस्वच्छांशवश्चामरं
संसक्तावभिषेकहेमकलशौ यच्चन्दनाङ्कौ स्तनौ ।
यत्कार्तस्वरकान्ति चारु जघनं सिंहासनं भूभुजां
साम्राज्यं तदिदं जयाजयमयः शेषस्तु चिन्तामयः ॥ १० ॥

नासादितानि वनवासदृढव्रतेन
चित्राणि नेत्रचरितानि मृगैर्मृगाक्ष्याः ।

तत्कान्तिरुज्ज्वलरुचिर्व्यसनादहो नु
हेम्ना हुताशपतनैरपि नैव लब्धा ॥ ११ ॥

अभिनवपयोधरोद्गतिविषमस्थितिहारहंसमुखपतिता।
शैवलवलीव चास्यास्त्रिककलिता भाति रोमलता ॥ १२ ॥

नेयं तरुण्यास्त्रिवली तरङ्गकुसङ्गिनी राजति रोमराजिः।
स्नात्वा गतोऽस्यां स्मरकेलिवाप्यां कलङ्कलेखामपहाय चन्द्रः ॥१३॥

कर्णे कोकिलकामिनीकलरवः संतप्तसूचीचयः
फुल्लाशोकपलाशचम्पकवनाद्युद्दामदावानलः।
तन्वङ्ग्या विरहे वसन्तसमयः कालः किमन्यन्नृणां
देहोच्चाटनमेव षट्पदघटाघ्राणातिथिर्मन्मथः ॥ १४ ॥

आपाण्डुता मदनकीर्तिसखी मुखेन्दौ
प्रौढिं बिभर्ति विरहे हरिणायताक्ष्याः।
अच्छिन्नबाष्पविसरारुणनेत्रकोण-
लीनप्रतापमिव मन्मथमुद्वहन्त्याः ॥ १५ ॥

वियोगे तन्वङ्ग्या हृदयदमने दैन्यसदने
घने भर्तृस्नेहान्मदनदहने धैर्यचलने।
समासन्ने चिन्ताव्यसनशमने प्राणगमने
तनुस्तापम्लाने वलति नलिनीपत्रशयने ॥ १६ ॥

दाक्षिण्यप्रणयेन पादपतिते कान्ते मया नेक्षिते
प्राणानां ज्वलितः प्रवासपिशुनः शापानलः पश्यसि।
एतैः संभ्रमकातरे किमधुना मिथ्यासमाश्वासनैः
संतापाय सखि त्वयैव ननु मे मानोपदेशः कृतः ॥ १७ ॥

[1]समायाते पत्यौ बहुतरदिनप्राप्य पदवीं
समुल्लङ्घ्याविघ्नागमनचतुरं चारुनयना।

---

१. 'आयाते दयिते मरुस्थलभुवामुद्वीक्ष्य दुर्लङ्घ्यतां तन्वङ्ग्या परितोषबाष्पतरला-मासज्य दृष्टिं मुखे। दत्त्वा पीलुशमीकरीरकवलं स्वेनाञ्चलेनादरादुन्मृष्टं करभस्य केसर-सटाभागावलग्नं रजः॥' इत्यद्भुतफलकवेरयं श्लोकः सुभाषितावलि-सूक्तिमुक्तावलि-शार्ङ्गध-रपद्धति-दशरूपावलोकादिषु प्रसिद्धः. 'समायाते' इत्यादिक्षेमेन्द्रश्लोकस्त्वस्य च्छायारूपः.

स्वयं हर्षोद्बाष्पा हरति तुरगस्यादरवती
रजः स्कन्धालीनं निजवसनकोणावहननैः ॥ १८ ॥

वासः कम्पविशृङ्खलं वितिलकं स्वेदोद्गमाद्राननं
संदष्टोऽधरपल्लवः कलयति श्वासोष्मणा म्लानताम्।
दूति त्वद्वचने शठस्य कठिनस्याग्रे गते कुण्ठतां
मत्स्नेहाद्विहितस्त्वया कुपितया क्लेशप्रवेशः कियान् ॥१९॥

व्याप्तास्वशोकज्वलनेन दिक्षु निरन्तरापातशिलीमुखासु।
रुद्धासु जालैर्वनमञ्जरीणां नष्टा गतिः पान्थकुरङ्गकस्य ॥ २० ॥

विकसति सहकारे दुःसहे कर्णिकारे
मधुकरपरिहारे सस्मिते सिन्धुवारे।
अहह विरहभीत्या कामिनीं कण्ठलग्नां
त्यजति नववसन्ते हन्त कापालिकः कः ॥ २१ ॥

तन्वङ्ग्या नवसंगमे व्यवसिते कान्ते बलान्मेखलां
मोक्तुं श्वासविकासकम्पविकलाः कण्ठे लुठन्त्यः सुधाम्।
मीलत्पद्मनिपीडितालिरणिता क्लीवाः(?) किरन्ति क्षणं
धन्यानां ननेनेति निःसहतया हुंकारगर्भा गिरः ॥ २२ ॥

गाढालिङ्गननिश्चलाङ्गलतिका कान्तेन रुद्धा बला-
दालम्ब्यालकवल्लरीं विदधता वक्त्राम्बुजे चुम्बनम्।
कम्पप्रस्फुरितारुणाधरदला बाला निमील्याक्षिणी
मन्ये मानसजन्मजीवजननं जप्यं समभ्यस्यति ॥ २३ ॥

केनैते विशिखाः स्फुरच्छिखिशिखाशाखासखा मानिनी-
मौनोन्माथपृथुप्रथा विरहिणीनिःश्वासपक्षानिलाः।
सह्यन्ते रतिवल्लभस्य लटभानेत्रान्ततीक्ष्णानना
संदष्टाधरपल्लवाग्रतरुणीसीत्कारशूत्कारिणः ॥ २४ ॥

आयुर्दीर्घतरं तनोतु नयनद्वन्द्वं कुरङ्गीदृशां
कीर्तिं ते स्मितसंततिः स्तनतटश्रोणी विशालश्रियम्।

देवस्य त्रिजगज्जयाय पटहे दत्ते मृगाक्षीगुरो-
रित्युत्साहसहे हिताय विहिता जाने जनन्याशिषः ॥ २५ ॥

इति कामप्रशंसा नाम तृतीयः परिच्छेदः ।

---

चतुर्थः परिच्छेदः ।

भोगाभोगविलोपकोपकलहैरस्तोकशोकाकुलं
कामं काममकामधामसमयं योगं वियोगानुगम् ।
रोगोद्गारविकारपाकविषमं निर्मूल्यनेत्रव्यथाः
सेकं मोक्षफलस्य संशयतरोरेकं विवेकं नुमः ॥ १ ॥

उद्याने मधुचन्द्रिका शशिमुखीगीतं सुहृत्सत्कथा
कस्येदं न सुखाधिकं सुखसखीं प्रीतिं परां वर्षति ।
किं त्वेतत्खलसङ्गसर्परसनामातङ्गकर्णाञ्चल-
प्रौढापाङ्गपतङ्गपक्षगणिकानागेन्द्रजालोपमम् ॥ २ ॥

बाल्य दुःसहमोहसंहतिहतं रागोल्बणं यौवनं
वृद्धत्वं सकलोपभोगकलनावैकल्यशल्याकुलम् ।
वैराग्येण विना विनष्टविमलालोकं सशोक सदा
संसारे सरतां पुनःपुनरहो यातं वृथा जीवितम् ॥ ३ ॥

दृष्टा बालकचेष्टा यौवनदर्पोऽथ वृद्धवैराग्यम् ।
सापि गता सोऽपि गतस्तदपि गतं स्वप्नमायेयम् ॥ ४ ॥

पुनःपुनर्जन्मसहस्रहेतुर्मलीमसः स्नेहसमोऽस्ति नान्यः ।
पुंसः प्रदीपस्य च यः करोति सेवोन्मुखत्वं गृहसंविभागे ॥ ५ ॥

आक्रान्तं पिशुनैर्नरेन्द्रभवनं विद्यागृहं मत्सरै-
रायासैर्द्रविणं कुलं कुतनयैर्नानावियोगैः सुखम् ।
साधुत्वं खलवञ्चनापरिभवैश्चिन्तासहस्रैर्मन-
स्तन्नास्त्येव न यत्सरोपकलुषं निर्दोष एकः शमः ॥ ६ ॥

भोगे रोगभयं सुखे क्षयभयं वित्तेऽग्निभूभृद्भयं
दास्ये स्वामिभयं गुणे खलभयं वंशे कुयोषिद्भयम् ।

माने म्लानिभयं जये रिपुभयं काये कृतान्ताद्भयं
सर्वं नाम भवे भवेद्भयमहो वैराग्यमेवाभयम् ॥ ७ ॥
कृतं शमजलेन यैर्विरततीव्रतृष्णं मनः
परं भवपराभवोद्धरणधीरधुर्यैर्न ते ।
भजन्ति जननीजतप्रसृतदुग्धधाराघन-
स्तनप्रणयि तत्पुनर्दशनशून्यमास्यं नराः ॥ ८ ॥
उत्सृज्य संतोषसुखामृतानि प्रीत्यै परराधनसाधनानि ।
अहो नु मानानि धनानि पुंसां धनानि निद्रासुखसाधनानि ॥ ९ ॥
विवेकस्वाधीने विजनगमने जन्मशमने
विकारे संसारे व्यसनपरिहारेऽपि सुकरे ।
परं लज्जा साधोः प्रसवसमये शोणितमये
पुनः पाणिं मूर्ध्नि क्षिपति यदि धात्रीति पतितः ॥ १० ॥
आयासप्रसवे विचारविरसे लज्जाजुगुप्सास्पदे
रागान्धा विरमन्ति नैव कुपदे स्त्रीभोगनाम्नि च्युताः ।
चित्तं नास्ति सचेतसामपि निजाकर्ये विमर्षः क्षणं
रत्यन्येषु पराङ्मुखत्वमनिशं प्राप्नोति नायं जनः ॥ ११ ॥
केशाकुले रक्तकषायपङ्ककपालभाजि प्रकटास्थिदन्ते ।
कायश्मशाने रमतेऽङ्गनानां कामाकुलः कामुककाकलोकः ॥ १२ ॥
अहो तृष्णा वेश्या सकलजनतामोहनकरी
विदग्धा मुग्धानां हरति विवशानां शमधनम् ।
विपद्दीक्षादक्षासहतरलतारैः[1] प्रणयिनी-
कटाक्षैः कूटाक्षैः कपटकुटिलैः कामकितवः ॥ १३ ॥
बाल्यं कुलीरजननीजनकप्रमोहं
तद्यौवनं कुलटभासुभगोपयोगम् ।
वृद्धत्वमप्युपचितं कुकलत्रपुत्रैः
सत्यं न किंचिदिदमत्र खचित्रमित्रम् ॥ १४ ॥

---

१. 'दक्षैः समतरलहारैः' इति पाठः.

न कस्य कुर्वन्ति शमोपदेशं स्वप्नोपमानि प्रियसंगतानि ।
जरानिपीतानि च यौवनानि कृतान्तदृष्टानि च जीवितानि ॥ १५ ॥

चिन्त्यन्ते यदि नाम रामनहुषश्वेतादिराजर्षयः
किं तैर्याति विशालकालकलनामीलत्कथाकौतुकैः ।
गण्यन्तां स्वदृशैव भूरिविभवा दृष्टाश्च नष्टाश्च ये
तस्मात्सर्वमनित्यताकवलितं ज्ञात्वा शमः स्मर्यताम् ॥ १६ ॥

यदा लोला लक्ष्मीः क्षितिपतिरणारण्यहरिणी
यदा स्वप्नोन्मेषा तनुघनतडिद्यौवनरुचिः ।
यदा कालः काम जनजलजकिञ्जल्कमधुप-
स्तदा संसारेऽस्मिन्नविबुधमनो नोपरमते ॥ १७ ॥

संतोषाम्भः पिबति निभृतस्वच्छमिच्छामयूरी
भ्रान्त्वा चान्तःकरणहरिणो याति विश्रान्तिमन्तः ।
लीनश्चायं शमतरुजले शीतले तापतान्त
मीलत्कामस्त्यजति नियतं मत्तचित्तद्विपेन्द्रः ॥ १८ ॥

याते भोगे स्मरणपदवीं सक्तनानावियोगे
शोकः स्तोकं स्पृशति न मनः सर्वथा निर्व्यथानाम् ।
काले काले किल कलयतामन्तवत्सर्वमन्तः
प्रायः कायक्षयपरिचये निश्चये निर्भरं नः ॥ १९ ॥

यातु व्यक्तिं कुसुमसमयः संचयः सौरभानां
खे खेलन्तो मलयनिलयाः संततं[1] वान्तु वाताः ।
कामः कामं क्षपयतु धृतिं पक्ष्मलाक्षीकटाक्षैः
शान्तिश्चित्ते स्थिरसुखसखी निर्विकारे ममास्तु ॥ २० ॥

जरानिगीर्णे सुभगाभिमाने म्लाने शनैर्भूतिलताप्रताने ।
धनावदाने शिथिलाभिमाने धृतिर्निधाने प्रशमाभिधाने ॥ २१ ॥
रागेण सार्धं वयसि प्रयाते गतेषु भोगेषु सह स्पृहाभिः ।
देहे च मोहेन समं प्रलीने निरर्गलोऽसावपवर्गमार्गः ॥ २२ ॥

---

१. 'संतताः' इति पाठः.

चित्तं वातविकासिपांसुसचिवं[1] रूपं दिनान्तातपं
भोगं दुर्गतगेहबन्धचपलं[2] पुष्पास्मितं यौवनम्।
स्वप्नं बन्धुसमागमं तनुमपि प्रस्थानपुण्यप्रपां
नित्यं चिन्तयतां भवन्ति न सतां भूयो भवग्रन्थयः॥ २३॥
अभिन्नार्थानर्थः सुहृदरिपरिच्छेदरहितः
समावज्ञामानः सदृशसुखदुःखव्यतिकरः।
न मौनी नामौनी वनजलसमानासनमना
न दैन्यं नादैन्यं स्पृशति गुणनैर्गुण्यविरतः॥ २४॥
सा दूरे हरिचन्दनस्य न परं हारेण किं हारिता
नो कान्ताकुचमण्डलस्य सुलभा चन्द्रे दरिद्रे कुतः।
गीते संगतिरेव नास्ति समता तस्यां न सिद्धामधो-
नैराश्ये सहसैव चेतसि कृते या प्रीतिरुज्जृम्भते॥ २५॥
लब्धावधिः सत्यसुखामृतस्य नवप्रमोदाद्भुतपूर्णकामः।
भारावतारादिव निर्वृतोऽहं त्यागेन सर्वाग्रहसंग्रहाणाम्॥ २६॥
धनार्जनविचिन्तनं हृदयरोपिताशावनं
वृथा चरणशातनं खलकदर्यसंसेवनम्।
सदा व्यसनशोचनं प्रियवियोगदीनाननं
विहाय गृहमज्जनं व्रजति पुण्यवान्निर्जनम्॥ २७॥
नास्ति स्वस्तिकरः परः परिभवो धर्मात्मनां प्राणिना-
मापत्तापशमक्षमं धनसमं नान्यत्क्रियाजीवितम्।
संसारे परमस्ति नोऽत्र सुखदं रम्यं न रामानना-
त्सर्वक्लेशविनाशनिर्वृतिरसः को नाम मोक्षात्परः॥ २८॥
चतुर्वर्गोपदेशेन क्षेमेन्द्रेण यदर्जितम्।
पुण्यं तेनास्तु लोकोऽयं चतुर्वर्गस्य भाजनम्॥ २९॥

इति मोक्षप्रशंसा नाम चतुर्थः परिच्छेदः।

**समाप्तोऽयं चतुर्वर्गसंग्रहः।**

---

१. 'वातविलासिपांसुसदृश वित्तम्' इति पाठः. २. 'गेहदीपचपलम्' इति पाठः.

भट्टवीरेश्वरकृतम्

## अन्योक्तिशतकम् ।

प्रोन्मीलल्लोलमौलिश्लथविकटजटाजालमालोक्य मुह्य-
न्गङ्गासंपातजातभ्रमभरविवशो विक्षिपँल्लोचनानि ।
आकर्षन्मौक्तिकालीं गिरिवरदुहितुः कण्ठसीमात उच्चैः
प्रातः श्रीहैमवत्या तदनु विहसितो लज्जितः पातु शंभुः ॥ १ ॥
पत्रं मुग्धतरं फल सुमधुरं सौरभ्यमभ्युन्नतं
चञ्चत्काञ्चनजित्वरं पुनरहो त्वत्केसरं सुन्दरम् ।
लावण्यं पुनरुत्तमं किमपरं किं तु स्फुरत्कण्टक-
व्यग्रं नालमिदं सरोरुह परं तेनातिदूयामहे ॥ २ ॥
यस्मिन्स्फीतमहो निपीतमधुना दिव्यं मधु स्वेच्छया
नीतान्येव दिनानि केलिभिरहो संयापिता शर्वरी ।
तस्मिञ्शीतनिपातजातविकले मल्लीकुले किं वृथा
हा हा हन्त कृशो मधुव्रत दृशोरेवंविधोऽनुग्रहः ॥ ३ ॥
सर्वाङ्गं व्रणितं मुहुर्विलुलितं सूचीदलैर्लोचनं
धूलीभिः कलितो द्विरेफ भवता लब्धो रसः केतके ।
अद्यापि स्फुटमेव गुञ्जसि परं नो बुद्ध्यसे तत्कथं
त्वां वच्मि प्रसभं ततो विलुठितो भूमौ परं ज्ञास्यसि ॥ ४ ॥
व्याघूर्णन्नवकुम्भिकुम्भयुगलं व्यालम्ब्य गुञ्जस्यलं
दानादानधिया मदोन्मदतनुर्युक्तं किमेतद्वद ।
नो जानासि दुरन्तदन्तविदलत्प्रोद्दण्डशुण्डाभर-
व्याघातोत्पतदङ्गभङ्गविकलः प्रौढव्यथां भृङ्ग हे ॥ ५ ॥
पेयं पङ्कजकोरके मधु नवं नेयं दिनं निर्भरं
केलीभिर्निभृतं सुखेन महसा संयापनीया क्षपा ।
किं तु प्रेमपिनद्धमुग्धविदलत्सौरभ्यमभ्योदयो
नो हेयो नितरा मधुव्रत सुधासङ्गी लवङ्गीरसः ॥ ६ ॥

माध्वीकं परिपीय पङ्कजवने विभ्रष्टबुद्धिः परं
वारंवारमहो विचाररहितो भूयश्चिरं गुञ्जसि ।
नो जानासि सुगन्धबन्धुरदलां लावण्यलीलाकुलां
स्निग्धान्तःकरणां मधुव्रत मनाङ्मल्लीमतल्लीं पुनः ॥ ७ ॥
प्रोद्दामातुलचण्डधामबहलज्वालाकलापाकुले
शून्ये संप्रति निर्जले पुनरहो निर्वीरुदुर्वीतले ।
एतस्मिन्समुपागतो गजपतिर्जीवेत्तदा निर्भरं
धाराभिर्धरणीतलं यदि मनाग्धाराधरः सिञ्चति ॥ ८ ॥
यावत्पङ्कजकोरकान्विकसयञ्श्रीमानसौ भानुमा-
न्नोदेति प्रसभं तमांसि विदलन्सानन्दमुच्चैस्तराम् ।
तावद्घोरघनान्धकारमिलितो झिल्लीरवाह्लादितो
विद्युत्पुञ्जविजृम्भितोऽम्बरतलं खद्योत विद्योतय ॥ ९ ॥
फुल्लत्कैरवकोपनिर्गतसुधासंसक्तभृङ्गाङ्गना-
मञ्जुध्वानधुरीणशीतकिरणे जागर्ति मुग्धाम्बरे ।
मन्येऽहं निबिडान्धकारपटलीसंलीनसर्वाकृतेः
खद्योतस्य हतप्रभस्य कियती शक्तिः समुन्मीलति ॥ १० ॥
स्वच्छन्दं नवमालिकासु विहर प्रेम्णारविन्दे पुनः
कुन्दे चापि तथा द्विरेफ कुमुदेऽथानन्दमङ्गीकुरु ।
किं त्वेतस्य कदापि केतकतरोर्मा गाः समक्षं यतो
धूलीभिर्घनकण्टकैश्च नितरां संवर्धितो वर्तते ॥ ११ ॥
नासौ पश्यति मालतीं नहि मनाक्प्रेमाणमालम्बते
चञ्चच्चम्पककोरकेषु कुरुते मोदं न मल्लीकुले ।
स्मारं स्मारमुदारकेसरलतां नालोकते पद्मिनी
क्षामः किं तु मधुव्रतोऽयमधुना गुञ्जन्मुहुर्भ्राम्यति ॥ १२ ॥
नैवालोकि सरोजिनी नहि मनाग्गुञ्जारवैस्तोषिता
जातिः किं च गलन्मरन्दमधुना नालिङ्गिता मालती ।

चित्रं किं तु मधुव्रतेन सहसा संपादिता सांप्रतं
भिन्ना रीतिरियं लवङ्गमुकुलान्यालोक्य मन्यामहे ॥ १३ ॥

कोपं मा कुरु कुन्दवल्लि सहसा मा दैन्यमङ्गीकुरु
स्थाता कत्यपि वासराणि विदितानन्दो मिलिन्दस्त्वयि ।
किं वातः परमस्य पश्य विदलन्माध्वीसमृद्धिः स्फुर-
न्मन्दस्यन्दसुगन्धितुन्दिलदला जाता लवङ्गीलता ॥ १४ ॥

सत्यं भृङ्ग वदामि किं तत इतो गन्तुं विधत्से मनो
केयं निर्भरदीनता क्व मधुरव्याहारतारध्वनिः ।
एकं सेवय सौरभं परिमलप्रोद्भिन्नमन्दानिलं (?)
यस्मिन्मूलफलप्रसूननिकरे साधारणः सौरभः ॥ १५ ॥

लावण्यं वचनातिगं पुनरहो सौरभ्यमुच्चैस्तरां
शैत्यं शीतलभानुविद्रवकरं किं वापरं पश्य रे ।
उन्मीलन्मकरन्दतुन्दिलदलं कस्मादकस्मादहो
भ्रातर्मुञ्चसि चञ्चरीक चतुर त्वं चम्पकानां वनम् ॥ १६ ॥

त्वं चेच्चम्पककोरके न कुरुषे प्रेमाणमेतावता
का हानिर्नहि तस्य कृत्यमपि रे किंचित्पुनर्हीयते ।
तेनैवास्य तु वैभवं मधुप हे यद्रूपयन्ति स्फुट
केलीमन्दिरदेहलीपरिसरे कर्णेषु वामभ्रुवः ॥ १७ ॥

स्यादुद्दण्डद्रुरूहचण्डकिरणज्वालावलीशोपकः
पाटीरोऽयमुदारसुन्दरतनुः सौरभ्यभव्योदयः ।
किं कुर्मः कथमत्र हन्त भविता चित्रं गतिर्मादृशा-
मा मूलं यदसौ भुजंगनिचयैरावेष्टितो वर्तते ॥ १८ ॥

सौरभ्यं वचनातिगं किमपरं दाक्षिण्यमुच्चैस्तरां
यद्यप्यस्ति नवीनशैत्यसुषमासंपत्तिरन्यादृशी ।
सर्वं तत्सुखदं परं तु नितरामेतेन दूयामहे
फूत्काराकुलभोगिभोगनिचयैः श्रीखण्ड यत्क्रीडसि ॥ १९ ॥

एकस्मिन्मलयाचले निवसता क्रूराशयेनामुना
  भिल्लेन त्वमिहाहृतो यदि न चेत्का हानिरेतावता ।
भ्रातः श्रीहरिचन्दन प्रविदलत्सौरभ्यभव्योदयं
  ज्ञातुं ते कुशलीभवन्तु नितरां स्निग्धा विदग्धा जनाः ॥ २० ॥
मा संतापमुरीकुरुष्व कठिनो लोकप्रकारोऽधुना
  मग्ना हन्त रसज्ञता रसकलाप्यन्तं गता सांप्रतम् ।
मालाकारकुरङ्गलोलनयनां हित्वा नवीनां पुनः
  स्निग्धां मुग्धतरां लवङ्गलतिके कस्ते गुणान्वक्ष्यति ॥ २१ ॥
शेफालीरुचिरप्रफुल्लकलिकामाध्वीं पिब त्वं मुदा
  वारंवारमुदारकुन्दविदलत्पीयूषमास्वादय ।
सानन्दं विहरारविन्दविपिने किं तु प्रभूतोदयो
  भ्रातर्भृङ्ग लवङ्गसङ्गजनितः स्नेहो न हेयोऽधुना ॥ २२ ॥
नो पत्राणि चलानि हन्त कुरुषे गुञ्जारवं नो मना-
  ग्धत्से नैव पुनः स्वयं चलसि रे किं तु स्फुटं सर्वतः ।
सानन्दं मकरन्दमेव निभृतं गृह्णासि यत्केवलं
  तत्किं कौशलमस्ति शंस भवतो ही किंचिदिन्दिन्दिर ॥२३॥
हित्वा सौरभसारसुन्दरदलां माध्वीकमुग्धप्रभां
  मल्लीं मालतिकां मदालसतया भ्रान्त्या मुहुः संभ्रमन् ।
गुञ्जन्गन्तुमुरीकरोषि मधुप त्वं पङ्कजानां वने
  नो जानासि विमुद्रिते कमलिनीबन्धौ पुनर्बन्धनम् ॥ २४ ॥
मन्दं मन्दमहो मधुव्रतवचोविन्यासमञ्जूक्तिभिः
  सान्द्रानन्दमयं कथं कथमहो निद्रायितोऽभूत्करी ।
सोऽयं कर्णविकारकर्मकुशलैः कारण्डवानां रवै-
  रुन्निद्रः सहसा करैः कमलिनीमुन्मूलितुं वाञ्छति ॥ २५ ॥
मुक्तानामसि नायकस्त्रिजगतामानन्दकन्दस्थली
  ज्योत्स्नानाथजनिर्जनैकशरणं मन्दाकिनीवल्लभः ।

किं वातः परमस्ति जीवननिधे जल्पन्ति लोका मुहुः
क्षारं यत्तव जीवनं प्रतिदिनं तेनैव दूयामहे ॥ २६ ॥

सूते हन्त हलाहलं जलनिधिर्जल्पन्ति ये मानवा-
स्ते जल्पन्तु परं तु नैव कृतिनामेतेन कापि क्षतिः ।
सत्येवं गुणसंनिधौ क्वचिदहो तेनैव ते गौरवं
यत्त्वां वन्यकुरङ्गसुन्दरदृशो जल्पन्ति रत्नाकरम् ॥ २७ ॥

स्फारोत्तुङ्गतरङ्गपीवरकरैराकृष्य रत्नोत्तमं
यत्त्वं जीवनमध्यतः क्षिपसि रे दूरे धरित्रीतले ।
युक्तं तज्जलनाथ नाथ कलय प्रोच्चैः प्रसादात्त्वया
लब्धं हन्त जगत्त्रयेऽपि सकले रत्नाकरत्वं पदम् ॥ २८ ॥

उत्पत्तिर्जलधौ सुधासहचरी ज्योत्स्नाभिरामा तनुः
स्थानं व्योम कुमुद्वतीपरिवृढश्चन्द्रेति नाम स्फुटम् ।
सर्वं चारु तथापि हन्त कठिना यत्त्वां कलङ्काङ्कितं
जल्पन्ति प्रतिवासरं सुरगणास्तेनातिदूयामहे ॥ २९ ॥

ज्योत्स्नाविभ्रमभारसाररुचिरे पद्मालयाबान्धवे
लोकानां नयनोत्सवे दिविषदामानन्दकन्दालये ।
मुग्धाकोमलमुग्धवक्त्रकमलस्पर्धाकरे पद्मिनि
त्वं चेच्छीतकरे न रज्यसि गुणश्लाघा तदस्तं गता ॥ ३० ॥

फुल्लत्कैरविणीपरागरुचिरा दिङ्मण्डली श्रूयते
कोकानामपि मानसं कलुषितं किंचिद्विजानीमहे ।
मन्दं पश्चिमपर्वताञ्चलपुटे श्रीमान्गतो भानुमा-
स्तत्सत्यं रजनीपतेः समुदयो जातः परं मन्महे ॥ ३१ ॥

शेते रङ्कुरयं सुखेन निभृतं पीयूषमश्नन्मुदा
मत्वैवं सहसा चकोरशिशुना संसेवितं सादरम् ।
को जानातु कुमुद्वतीपतिरसौ पीत्वा भृशं वारुणीं
हा हा हन्त घनान्धकारनिकरैरावेष्टितो वर्तते ॥ ३२ ॥

ज्योत्स्नाभिर्भुवनं तनोषि विमलं पीयूषगर्भैः करै-
रामोदं कुमुदे दधासि बहुशः संजीवयस्यौषधीः ।
सर्वं तत्सुखदं परं तु नितरामेतेन दूयामहे
नीहारैः कवलीकरोषि लवलीवृन्दानि शीतद्युते ॥ ३३ ॥

सानन्दं घनगह्वराणि सहसा संगाहसे निर्भरं
भूयः सौरभजातमप्यनुदिनं गृह्णासि यत्तद्वरम् ।
किं तु श्रीयुतगन्धवाह भवतो नो युक्तमेतन्मना-
ग्यत्त्वं तत्र करोषि नैव सदसद्व्यक्तेर्विवेकक्रियाम् ॥ ३४ ॥

शुष्काः संप्रति निम्नगास्तत इतो नालोक्यते जीवनं
भूयः क्वापि न वापिकापि नितरां जाताविलं पल्वलम् ।
ग्रीष्मोऽयं समुपागतोऽस्ति बहुशो वाचालतां मुञ्च रे
मन्दं संचल भेकशाव समभूत्कालः करालो महान् ॥ ३५ ॥

एषा सीदति सुन्दराम्बुजवनी गुञ्जद्द्विरेफाङ्किता
चञ्चत्केसरनिर्यदुग्रबहलव्यामोदमेदस्विनी ।
स्फारोत्तुङ्गकरीन्द्रदुर्वहकरप्रौढाभिघातैः परं
विध्वस्ता परितो विभाति पुरतो विभ्रष्टपत्राम्बरा ॥ ३६ ॥

प्रोन्मीलत्सुरनिम्नगापरिपतद्वीचीचयव्याहत-
व्याधूतानिलसंचलज्जलमिलद्गात्रोऽप्यसौ षट्पदः ।
स्मृत्वा हन्त दुरन्तकेतकशिखासंपातसंपादित-
प्रोत्तुङ्गाङ्गविकारभारमधुना नो रन्तुमुत्कण्ठते ॥ ३७ ॥

हन्तासीत्परितो नवीनजलदप्रोत्तुङ्गधाराजलैः
पूर्णानेकसहस्रपङ्कजदलैः कीर्णा नदीयं पुरा ।
सेयं संप्रति चण्डभानुविलसच्चण्डातपप्रोच्छल-
ज्ज्वालाजालविलुप्तजीवनभरा हा हन्त संताम्यति ॥ ३८ ॥

नोच्चैर्जल्प मनाग्यतस्व सहसा कुञ्जे निलीय क्षणं
गन्तुं कीर वदामि मास्तु मधुरव्याहारतारध्वनिः ।

काकोलादपि दारुणैरनुचितारम्भाग्रणीभिः परं
रुद्धा संप्रति किं किरातनिकरैर्नालोक्यते मेदिनी ॥ ३९ ॥

प्रोद्यत्प्रौढमहीमहेन्द्रभवने प्रोतुङ्गसौधाङ्गणे
गत्वा काक वराक किं कलयसे साम्यं मरालैः समम् ।
छिन्द्रान्वेषणभूरिकर्मकुशलाः किंचिल्लभन्ते खलाः
सम्यक्पण्डितपुण्डरीकतुलनामारोप्य कण्ठे गुणम् ॥ ४० ॥

लोके दृष्टमिदं मया बहुतरं हंहो न सन्त्येव ते
ये विन्दन्ति सखायमुत्तमगुणं मित्रैकचित्ते रतम् ।
शम्बूकैः कलयन्ति केलिकुतुकं वापीषु कारण्डवा
नो वा मानसमुग्धपङ्कजदलं विस्मृत्य जिघ्रन्त्यपि ॥ ४१ ॥

क्षीराम्भोनिधिकन्यका मधुरिपोर्वक्षःस्थलस्थायिनी
शीतांशोर्भगिनी जगत्त्रयजनिः किं चाधिका ते स्तुतिः ।
एकैकं वचनातिगं जलधिजे सर्वं विजानीमहे
चाञ्चल्यं यदि नाम चेन्नहि भवेदेकं कलङ्कास्पदम् ॥ ४२ ॥

दर्पं मा वह बालवत्सनिकरानालोक्य पुच्छच्छटा-
पातैरेव महोक्ष गर्जसि मुधा किं गर्जितेनामुना ।
तावत्संचर यावदाशु न मनागादाय सीरं हठा-
त्कर्षत्येष कृषीवलस्तत इतो भूयोऽपि भूमीतले ॥ ४३ ॥

त्वामालोक्य समागतः कथमसौ केलिक्रियाकोविदो
हित्वा कत्यपि काननानि दिवसप्रान्ते द्विरेफो युवा ।
त्वं त्वेनं समुदीक्ष्य पत्रनिकरानाकुञ्च्य यद्गोपनं
वक्त्रस्याशु करोषि पद्मिनि न तद्युक्तं प्रतीमो वयम् ॥ ४४ ॥

दूरे तिष्ठति काननं नहि मनाङ्नीरं समालोक्यते
क्रूरः संप्रति बालुकापरिकरश्चण्डांशुरत्युन्नतः ।
भूरेषा मरुरेव संप्रति कथं गन्तव्यमेकाकिना
मन्दं यूथपतिर्मुहुर्मुहुरिति ध्यायन्धुनीते शिरः ॥ ४५ ॥

दिक्चक्रं करिशाव दावदहनैर्दग्धं पुरो दृश्यते
छाया क्षीणतरा क्षमापि समभूद्दूरे न नीरं क्वचित् ।
चित्रं चण्डचलत्प्रचण्डकिरणज्वालाकुलाङ्गो मुधा
मध्याह्ने कथमेकदैव सहसा गन्तुं समुत्कण्ठसे ॥ ४६ ॥

शार्दूलाः प्रतिपेदिरे प्रथमतो गर्भान्तरं भूरुहां
कुञ्जं किं च समाश्रयन्ति हरिणा लीना वराहाः क्वचित् ।
उद्दण्डप्रकटप्रचण्डकिरणज्वालाकुले दिक्कुले
हा हा हन्त करी करोति कतमां जीवातवे जीविकाम् ॥४७॥

उच्चैश्चण्डमरीचिमण्डलकरज्वालाकुला दिक्तटी
पश्चाद्घोरदवाग्निगर्वगरिमोद्रिक्ता धरित्री पुरः ।
कर्तव्यं कथमत्र हन्त करुणारङ्गी कुरङ्गीपति-
र्मत्वैवं हरिणीविलोकनघनीभूतोऽभवत्कुण्ठितः ॥ ४८ ॥

कृत्वा पर्वतकंदरापरिसरे केलीभरं लीलया
भुक्त्वा पङ्कजकोरकांश्च परितो भृङ्गैः समावेष्टितः ।
यावद्याति करेणुकाकटतटीकण्डूयने केवलं
तावत्तीव्रहरीन्द्रदुर्वहकरैः क्षुण्णोऽभवत्कुञ्जरः ॥ ४९ ॥

यः पूर्वं नवदानदर्पिततनुर्दन्तेन दन्तावलां-
श्चूर्णीकृत्य महाभिमानभरितो नो मन्यते कानपि ।
क्रीडन्नेव समागतो विधिहतो हा हन्त नीराशये
पङ्के मग्नकलेवरः करिवरः सोऽयं शनैस्ताम्यति ॥ ५० ॥

अन्यं काननमाशु गच्छ तरसा वन्यं फलं भुङ्क्ष्व रे
धन्यं धाम विभाति ते नहि तथा पुण्यं जघन्यं कुरु ।
एतस्मिन्करिशाव मा व्रज वने जल्पामि तथ्यं वचो
जानास्येव करीन्द्रदर्पदलनो निद्राति पञ्चाननः ॥ ५१ ॥

निद्रामुद्रितलोचनः प्रतिपदं छायातले भूरुहां
प्रोद्दण्डद्विपगण्डभित्तिदलनप्रोद्रिक्तरक्तारुणः ।

सिंही जानुनि दत्तमस्तकलसत्सर्वाङ्कः केसरी
निद्राति प्रतिवासरं सुखमिति ध्यायन्करी कम्पते ॥ ९२ ॥
शून्यं काननमा निरीक्ष्य तरसा चीत्कृत्य गाढं हठा-
न्मातङ्गाधिप मानसे बत वृथा गर्वोद्गमं मा कृथाः ।
जानीमो वयमद्य कुञ्जरघटाविक्षोभकारी पुनः
पारीन्द्रो न जगाम लोचनपथं तेनास्ति नो वै भयम् ॥ ९३ ॥
कामं कोपकषायिताक्षियुगलं कृत्वा करोत्फालनैः
क्षुद्रान्वन्यमृगान्करीन्द्र सहसा विद्रावय त्वं मुदा ।
हेलाखण्डितकुम्भिकुम्भविगलद्रक्तारुणाङ्गे हरौ
जाते लोचनगोचरे यदि भवान्स्थाता तदा मन्महे ॥ ९४ ॥
दैन्यं मा त्वमुरीकुरु प्रतिपदं प्रेक्ष्यातुरां पद्मिनीं
राकाशारदशीतरश्मिकिरणैराबद्धमुग्धाननाम् ।
किं तु त्वं भ्रमसि द्विरेफ विदलन्माध्वीकधाराधरे
सानन्दं नवमल्लिवल्लिनिकरे गत्वाद्य तृप्तिं भज ॥ ९५ ॥
मन्दं पश्चिमशैलमौलिमुकुटालंकारभूतो रविः
संध्याकर्बुरितं नभः कलुषिता ध्वान्तैः परं दिक्तटी ।
एका पङ्कजिनी सुधाकरकरैर्भीता परं मुद्रिता
तत्किं संप्रति चञ्चरीक चरसि व्यर्थः प्रयासोऽधुना ॥ ९६ ॥
भृङ्गाणां नवनीरजानि विदलत्सौरभ्यलोभ्यान्यलं
मल्लीकेसरचम्पकानि नितरां तिष्ठन्ति पुष्पाकरे ।
एकं कोकिलशावकस्य शरणं मुग्धप्रसूनाकर-
प्रस्यन्दन्मकरन्दतुन्दिलदलो माकन्दभूमीरुहः ॥ ९७ ॥
धैर्यं वायस धार्यतां समुचितो नोद्वेगभारस्त्वयि
प्राणान्मुञ्चसि किं वृथा पिकसुतैः पुत्रत्वमायाति रे ।
जानास्येव कलेः प्रपञ्चमखिलं किंचाधिकं वा परं
हित्वा नीरनिधिं लसन्ति निधयो वापीषु काचित्स्वपि ॥ ९८ ॥

शैत्यं शारदशीतरश्मिकिरणादप्युत्तमं तादृशं
सौरभ्यं वचनातिगं जगति ते श्रीखण्ड सर्वं वरम् ।
किं तु त्वां सहसा किरातगृहिणी दीप्ताग्निकुण्डे जवा-
दुन्मूल्याशु करैः करोति तरसा शुष्केन्धनं लीलया ॥ ५९ ॥

आस्ते नो सुषमा न चापि कुसुमामोदो हि नो वा मना-
क्चातुर्यं मकरन्ददानविषये किं चातुरीयं पुनः ।
यत्त्वं चित्रगतं कुशेशयदलं पुष्णासि गुञ्जारवै-
र्माहात्म्यं क इव ब्रवीमि तदहो हे चञ्चरीकाधुना ॥ ६० ॥

क्षिप्रं मुञ्च कुरङ्ग काननमिदं रे ताण्डवं मा कृथाः
किं ते वैभवविभ्रमेण तरसा गात्राणि संरक्षय ।
आस्तां कीर्तिभरः किरातविशिखैः क्षुण्णः क्षणानन्तरं
क्षीणाङ्गः क्षितिमण्डलोपरि पुनर्नो चेत्क्षयं यास्यसि ॥ ६१ ॥

त्वामाधाय निजोदरे कमलिनी चक्रे न माध्वीरसै-
र्नित्यं कोमलकेसरैस्तव पुनः किं किं मनोवाञ्छितम् ।
त्वं त्वेतां कलकूजितैरपि मनाङ् नो भावयस्यातुरां
तत्किं साहजिकं मधुव्रत मनाक्त्यक्तुं रसं वाञ्छसि ॥ ६२ ॥

जाता नैव तृषा कृशा न समभूत्तापापकर्षक्रिया
नो वा लोचनपङ्कजैरपि मनागालोकि किं चाधिकम् ।
क्षुभ्यद्घोरतरारवैः प्रतिदिशं झञ्झानिलैर्द्राविता
सेयं नीरदमण्डलीति कलयञ्चञ्चत्यलं चातकः ॥ ६३ ॥

दैन्यं मा त्वमुरीकुरु प्रतिपदं हित्वा मनाग्यूथिकां
स्थेयं कत्यपि वासराणि कथमप्यालम्ब्य धैर्यं हृदि ।
आयाते खलु माधवे प्रविदलत्सौरभ्यलोभास्पदे
नूनं ते शरणं स एव भविता माकन्दभूमीरुहः ॥ ६४ ॥

साफल्यं कलये चकोर भवतो धन्योऽसि मन्यामहे
कां कीर्तिं कथयामि ते त्रिभुवने जागर्ति ते संस्तवः ।

किं वा पुण्यमितस्तवास्ति विमलं पीयूषधाराभरं
चन्द्रे पासि निरन्तरं कमलिनीदृग्गोचरेऽपि स्फुटम् ॥ ६५ ॥

आध्माताः प्रतिदिङ्मुखं सरभसं गर्जन्त्यमी वारिदाः
प्रौढध्वानधुरंधराः प्रतिपदं चञ्चन्ति विद्युच्छटाः ।
भूयो मत्तमहामयूरनिकराः कूजन्ति केकारवै-
स्तन्मन्ये समुपागतोऽस्ति सहसा वर्षायुतो वासरः ॥ ६६ ॥

भूयो निर्भरसर्वगर्वगरिमा मुग्धाङ्गनानां मुदा
चञ्चच्चम्पककोपचुम्बितमना वात्यद्य मन्दानिलः ।
नो युक्तं सहसान्यतः प्रचलितं हे पान्थ चित्तव्यथां
मा कार्षीः किमु पञ्चबाणनृपतौ जागर्ति चिन्ता तव ॥ ६७ ॥

शैत्यं तापहरं तवास्ति न मुधा मन्ये सुधानायक
प्रोदञ्चत्सुषमा समृद्धिरपि ते जागर्ति लोकत्रये ।
सर्वं चारु मनाक्तथापि यदि चेत्प्राप्तोऽसि मुग्धाङ्गना-
वक्त्रेन्दोस्तुलनां तदा क इव ते भाग्योदयं मन्महे ॥ ६८ ॥

आयाता रजनी भविष्यति महाविश्लेषदावानलो
नोद्वेगः सहसा कृशाङ्गि मनसा कार्यो रथाङ्गाह्वयः ।
इत्थं बाष्पनिरुद्धगद्गदतया संभाष्य कोकीं चिरं
चिन्तापूर्णमना विनोदविमुखो हंहो विधिं निन्दति ॥ ६९ ॥

सौन्दर्यं दलितं दवानलबलैर्मन्दं मरन्दोऽप्यसौ
स्वच्छन्दं गत एव का पुनरहो पुष्पादिकानां कथा ।
शीर्णा पर्णपरम्परा विगलिता सेयं लता तत्कथं
हंहो मन्द मिलिन्द कुन्दविपिनं नो हातुमाकाङ्क्षसे ॥ ७० ॥

रम्यं काननमुन्नतास्तरुगणाः स्निग्धं पयः किं पुन-
र्मुग्धान्येव फलानि हन्त परितः सन्त्यत्र पुष्पाण्यपि ।
सर्वं हन्त विहाय निर्गतवतो दन्तावलस्य स्फुर-
च्चण्डांशुज्वलिते मरौ तदखिलध्यानैर्मनो मुह्यति ॥ ७१ ॥

यत्संसर्गवशादसाधुचरिता एते पुनः कोटिशो
निम्बाशोककपित्थबिल्वबकुलाः सौगन्ध्यमापुः परम्।
धन्यस्त्वं हरिचन्दन त्रिजगतां संतापशान्त्यै पुनः
संसारे नियतं स कोऽपि सदृशो युष्मादृशां वर्तते॥ ७२॥

सानन्दं सुरनिम्नगाप्रविलसत्कूलेऽनुकूले पुन-
र्मन्दं मन्दमहो कलिन्दतनयातीरे विहारं कुरु।
अस्मिन्किं तु मरालबाल सरसीकुञ्जे न याहि क्षणं
यस्मादत्र पतत्रिपातरसिका भिल्ल्यः स्वनं कुर्वते॥ ७३॥

तृष्णाजर्जरिताकृतिः कवलितो घर्मांशुघोरैः करै-
र्दीर्घोदञ्चितचञ्चुरद्य कलयंस्त्वत्तः परं जीवनम्।
हंहो चातकशावकोऽयमधुना त्वां वीक्षते केवलं
त्वं चेदम्बु ददासि नाम्बुद भवेदस्याश्रयः कस्तदा॥ ७४॥

आ प्रातर्घनतृष्णया कवलितं प्रोद्दण्डचण्डातपै-
र्दग्धं जीवनहानितः कलुषितं चिन्ताभरैः कीलितम्।
प्रस्निग्धामृतधारया प्रतिदिनं संप्लावयंश्चातकं
त्वत्तः कोऽपि न वारिवाह भुवने जागर्ति जानीमहे॥ ७५॥

चञ्चच्चातकचञ्चुकोरकपुटीं नो पूरयस्यन्वहं
दिक्तापं नवनीरसीकरभरैर्नो वा मनाग्लुम्पसि।
क्षेत्रं सिञ्चसि नैव किं च बहुशः कान्तारमाप्लाव्य-
न्यद्गर्वं कुरुषे पयोद भवतस्तत्किं नयो दृश्यते॥ ७६॥

चञ्चच्चण्डमरीचिमण्डलकरज्वालाकलापैरहो
न स्याच्चातकपोतकः कवलितो यावत्ततो विह्वलः।
भ्रातः श्रीयुत वारिवाह निभृतं जीयाश्चिरं निर्भरं
तावद्धीरतरं धरातलमिदं धाराभिरासिञ्चय॥ ७७॥

नो गत्वा गगनाङ्गणेऽनुसरति प्रोच्चैर्न जल्पत्यहो
नो वा चण्डमरीचिमण्डलभिया संसेवते कानपि।

चित्रं भूमिगतं तथापि निभृतं धाराजलैर्निर्मलैः
सिञ्चत्येव चिरेण चातकशिशुं श्रीमानयं वारिदः ॥ ७८ ॥

तापं तूर्णमपाकरोपि नितरां पाटीरवाटीं पुनः
प्रेम्णा पल्लवयस्यलं वितनुषे मुक्ताफलं शुक्तिषु ।
धाराभिर्धरणिं धुनोपि परितो धाराधर त्वं यथा
भ्रातश्चातकशावकं बत तथा संभावयाम्भोभरैः ॥ ७९ ॥

भूमेस्तापमपाकरोषि नितरां भूमीरुहो वर्धय-
स्यानन्दं विदधासि किं च तनुषे सस्ये प्रशस्यं मुदा ।
किं किं वारिद ते गुणोत्करमहं जल्पामि धन्योऽसि रे
धाराभिश्चिरखिन्नचातकशिशुं यज्जीवयस्यातुरम् ॥ ८० ॥

मोदन्ते करिशावकास्तत इतः क्रीडन्ति कोलाः सुखं
कृत्वाङ्के तनयं कुरङ्गगृहिणी रोमन्थमभ्यस्यति ।
हीनं तेन मृगाधिपेन सहसा मन्यामहे काननं
द्वित्रैरेव दिनैर्भविष्यति परं वन्याभिरन्यादृशम् ॥ ८१ ॥

तूर्णं यात मृगाः पलायत वृका यूयं पुनः सर्वथा
कोलाः क्वापि निलीयत प्रसृमराः कोलाहलं मुञ्चत ।
दृप्यद्दानदुरूहदारुणदलद्दन्तावलग्रामणी-
गर्वग्रामविदारणाकुलकरः सोऽयं पुरः केसरी ॥ ८२ ॥

प्रौढोत्क्षिप्तमहामहीध्रशिखरं कुत्रापि नीराशये
दृष्ट्वैव प्रतिबिम्बितं सचकितं खात्प्लुत्य गाढं हठात् ।
पातुं वाञ्छति नो जलं करिवरस्याशङ्कया किं त्वयं
दर्पोद्धूतशिरा धुनोति नयने क्रोधोद्धुरः केसरी ॥ ८३ ॥

सक्रोधं करिणां मदैरुपहितामालोक्य विश्वंभरां
भूयः कोपकषायिताक्षियुगलं पद्भ्यां धरां दारयन् ।
बाहुभ्यां सहसा विकृष्य तिमिरं भूमौ मुहुः पातय-
न्भ्रूयुग्मं प्रविधूनयन्विजयते कोऽप्येष कण्ठीरवः ॥ ८४ ॥

यः सावेशमशेषवारणघटासंघट्टविद्रावणो
 मुक्ताजालमयानि हन्त नितरां चक्रे वनानि स्फुटम् ।
दृप्यद्दारुदुरूहपञ्जरगतो हा हा हतो वेधसा
 सोऽयं मानधनो धुनोति नयने क्रोधोद्धुरः केसरी ॥ ८५ ॥

यस्य त्रासवशाद्वने करिवराः स्पन्दन्ति नो वामनाः
 कोलाः केऽपि न निःसरन्ति महिषा व्यग्राः पतन्ति क्षितौ ।
सोऽयं लोहदुरूहनव्यनिगडानद्धाङ्घ्रियुग्मो मुहुः
 स्मारं स्मारमुदारवन्यचरितं कण्ठीरवस्ताम्यति ॥ ८६ ॥

मन्दं मन्दमहो मरन्दनिचयः पेयोऽमुना सादरं
 नेयो रात्रिभरः परं तु सहसा गेयः स्तवो मान्मथः ।
इत्यालोच्य समागतं खलु मया सायं नवे कैरवे
 को जानाति निशापतिः पुनरसावस्ताचलं यास्यति ॥ ८७ ॥

त्वं चेद्भुञ्जसि निर्भरं भ्रमर हे पीत्वापि कौन्दं मधु
 स्वच्छन्दं न विलोकयस्यपि मनागेनं किमेतावता ।
उन्मीलन्मकरन्दतुन्दिलदलत्पुष्पाकरास्वादनं
 माकन्दस्य परं स एव सुकृती जानाति किंचित्पिकः ॥८८॥

आ बाल्यं भवता समीर कतिधा सार्धं मृणालीदलं
 भुक्तं केलिकथामृतैरपि तथा नीतं रहः सादरम् ।
चेतान्दोलनलालनैर्मृगदृशां वक्षःस्थलास्फालनै-
 र्भूयः संप्रति मां विना तव मनो रन्तुं कथं मोदते ॥ ८९ ॥

गम्यन्तां दशदिक्तटीपरिसरे रे मत्तमातङ्गजा
 लीयन्तां गिरिकंदरासु तरसा हित्वाटवीं ते मृगाः ।
युष्मच्चीत्कृतिभीरुतारनिनदप्रध्वस्तनिद्राभर-
 व्याघूर्णन्नयनोऽयमेति सहसा क्रोधोद्धुरः केसरी ॥ ९० ॥

कृत्वा हन्त निरन्तरं कमलिनीकोपे सुधावैभवं
 हित्वा संप्रति तां हिमैरुपहितां धत्से क्वचिन्मानसम् ।

तत्किं त्वां कथयामि हे मधुकर व्रीडाकरं भाषितं
धिग्धिक्प्रेम भवादृशां न करुणालेशोऽपि संदृश्यते ॥ ९१ ॥

शेते हन्त मृगाङ्गना निजशिशुं कृत्वा निकुञ्जोदरे
भूयः कुण्डलनां विधाय विवरे निद्राति सर्पाङ्गना ।
शीतार्ताः किल नैव पङ्कजदलं जिघ्रन्ति माध्वीलिहो
दृष्ट्वा हन्त हिमागमं नहि मनाङ्नीडं त्यजन्ति द्विजाः ॥ ९२ ॥

सानन्दं मकरन्द तुन्दिलदलां मुग्धप्रभां पद्मिनी
यावच्चुम्बति केसरारुणतनुर्मत्ताद्विरेफो युवा ।
तावत्तीव्रकरीन्द्रदुर्वहकरव्याघातसंघूर्णितो
हा हा हन्त मधुव्रतोऽयमधुना भूमौ पुनस्ताम्यति ॥ ९३ ॥

चञ्च्वा नव्यसमीरधीरसरसीतीरं विलोक्योत्सुको
धीरं धीरमहो महोन्नतिपरस्तृष्णाङ्कुशाकर्शितः ।
पातुं यावदहो करोति विमलं नीरं मरालः कृती
मण्डूकध्वनिजर्जरीकृततनुस्तावच्छनैस्ताम्यति ॥ ९४ ॥

लोकेऽस्मिन्पिशुनाः कथंचिदपि वा नैवोपकारव्यथां
विन्दन्ते सहसा परं तु सहसा जल्पन्ति दोषं स्फुटम् ।
शम्बूकैः कलयन्ति केलिकुतुकं वापीषु कारण्डवा
नो वा मानसमुग्धपङ्कजदलं विस्मृत्य जिघ्रन्त्यपि ॥ ९५ ॥

आदौ पत्रविचित्रितः पुनरसौ मुग्धप्रसूनाङ्कितः
पश्चात्स्निग्धफलोद्गमे वनरसैः सिक्तो मया सर्वतः ।
दानोन्मत्तदुरन्तवारणकटीसंघट्टनैः केवलं
सोऽयं घूर्णित एव दैववशतो माकन्दभूमीरुहः ॥ ९६ ॥

चञ्चत्पत्रविचित्रितां मधुकरस्फूर्जत्फलालम्बिनी
मन्दं मुग्धमरन्दमञ्जुपुलकां कान्तिप्रभूतोदयाम् ।
प्रोन्मीलत्कुसुमां प्रकीर्णसुषमां हा हा चलत्कण्टका
को हेतुः कलधौतकेतकलतां त्यक्तु समुत्कण्ठसे ॥ ९७

भुक्त्वा मीनमहो नवीनमधुना पीतं जलं निर्मलं
नीतः केलिभरेण वासरगणो किं तु त्वयाद्यावधि ।
गन्तव्यं खलु कुत्रचिद्बक वने चेच्चण्डचण्डातपै-
स्तप्ते हन्त जलाशये पुनरहो दैन्यं मुहुर्धास्यसि ॥ ९८ ॥

अग्रे तिष्ठति दारुणाकृतिरसौ क्रोधोद्धतः केसरी
पश्चादुद्भटदावदूषितधरासंक्रान्तचण्डानिलः ।
किं कुर्मः सहसा विहाय कलभानेतान्व्रजामः कथं
हंहो कूणितलोचनेति करिणी चिन्ताकुला ताम्यति ॥ ९९ ॥

आदावङ्कुरितं पुनः प्रतिपदं पत्रावृतं त्वां मुदा
सौरभ्यस्फुरितप्रसूनकलितं दृष्ट्वाथ हृष्टोऽस्म्यहम् ।
किं ब्रूमः फलिते त्वयि द्रुततरं हा हन्त लिम्पाक हे
भूयो व्याकुलयन्ति कण्टकभराः सर्वत्र तत्कि ब्रुवे ॥ १००॥

त्वत्तः श्रीरजनि स्फुटं समभवत्कल्पद्रुमः सादरं
जातास्ते निधयः पुनः किमपरं जज्ञे सुधादीधितिः ।
किं ब्रूमस्तव वैभवं जलनिधे त्वामप्यहोऽहो वृथा
यद्भूयस्तृषिता प्रयाति जनता तत्किं ब्रुवे त्वद्गुणान् ॥ १०१ ॥

भेकाः कूपजलं पिबन्तु नितरां वापीषु कारण्डवाः
साकूतं सरसीषु हन्त नितरां तुङ्गाः कुरङ्गादयः ।
तृष्णाव्याकुलितस्य चातकशिशोः किं तेन यावद्धरां
धन्याभिः परिपूरयन्ननुदिनं नोदेति धाराधरः ॥ १०२ ॥

तावद्ग्रीष्मगभीरतापनिवहाः संसारमुच्चैस्तरां
यूयं तापयत प्रचण्डकिरणज्वालावलीपूरिताः ।
यावत्सौरभभव्यनव्यविदलन्मल्लीमतल्लीदल-
प्रोन्मीलन्मकरन्दतुन्दिलमना नोदेति मन्दानिलः ॥ १०३ ॥

चन्द्रो हन्त कलङ्कशङ्कितततनुः क्षारान्वितः सागरो
हंहो कल्पतरुस्तरुः पुनरहो मेरुः स्वयं पर्वतः ।

कामं कामगवी पुनः पशुरहो किं वा वहु ब्रूमहे
संसारे भवतस्तुलां कलयितुं को वा समर्थो भवेत् ॥ १०४ ॥
योऽभूद्द्राविडचक्रवर्तिमुकुटालंकारभूतस्य रे
मौद्गल्यस्य हरेः सुतः क्षितितले वीरेश्वरः सत्कविः ।
तस्य प्रोद्गतसूक्तिनिर्मलसुधाशुद्धान्तरस्य क्षणा-
देषा निर्मितिरुत्तमा मतिमतां नित्यं मुदे जायताम् ॥ १०५ ॥

इति श्रीवीरेश्वरभट्टनिर्मितमन्योक्तिशतकं समाप्तम् ।

---

# त्रिपाठिश्रीशिवरामप्रणीता
# नक्षत्रमाला ।

सटीका ।

राजत्रयसमानीतां मुनित्रयपरिष्कृताम् ।
जाह्नवीं शब्दविद्यां च चिन्तयामीष्टसिद्धये ॥

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षार्थं निबध्नाति—

धरात्मजारम्यमुखारविन्दमरन्दरोलम्ब उदारकीर्तिः ।
शेषाख्यसंयोगविशेषशोभो देवो मुदे वोऽस्तु शिवः स रामः ॥ १ ॥

धरेति । धरस्य पर्वतस्यात्मजा तस्या रम्यमुखारविन्दस्य मरन्दो मकरन्दस्तस्य रोलम्बो भ्रमरः । उदारकीर्तिः । शेषाख्यस्य संयोगेन विशेषशोभः । शेषस्य भूषणत्वादिति भावः । एतादृशो देवः शिवः स प्रसिद्धो रामो वो मुदेऽस्तु । पक्षे—धरया आत्मजा सीता । शेषाख्येण लक्ष्मणेन विशेषशोभा सौभ्रात्रत्वात् । श्लेषालंकारः—'वाच्यभेदेन भिन्ना यद्युगपद्भाषणस्पृशः । श्लिष्यन्ति शब्दाः श्लेषोऽसौ' इति लक्षणात् । वृत्त्यनुप्रासः—'वर्णसाम्यमनुप्रासश्छेकवृत्तिगतो द्विधा । सोऽनेकस्य सकृत्पूर्वं एकस्याप्यसकृत्परः ॥' इति लक्षणात् । यमकालंकारः—'अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः । यमकं पादतद्भागवृत्ति तद्यात्यनेकताम् ॥' इति लक्षणात् । संभोगशृङ्गारः—'अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ । दर्शनस्पर्शनादीनि स संभोगो मुदान्वितः ॥' इति लक्षणात् । अ-

---

१. अयं शिवरामत्रिपाठी खिस्तसंवत्सरीयाष्टादशशतकपूर्वार्धसमुत्पन्नानागेशभट्टादर्वाचीनः, यतोऽयमत्रैव टीकायां तत्कृतपरिभाषेन्दुशेखरस्मरणं करोति. एतत्कृतग्रन्थास्तु स्वयमेवानेनात्रैव टीकासमाप्तौ गणिताः सन्ति. तेष्वस्माभिः (१) कादम्बरीटीका, (२) दशकुमारचरितटीका, (३) नक्षत्रमाला सटीका, (४) रसरत्नहारः सटीकः, (५) वासवदत्ताटीका, एतद्ग्रन्थपञ्चकमद्यावधि समुपलब्धमस्ति.

नुकूलो नायकः—'अनुकूलस्त्वेकनायिकः' इति दशरूपकात्। उपजातिवृत्तम्—'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति तल्लक्षणात्॥

गोत्रस्खलनेन मानवतीं प्रत्याह—

गोत्रस्खलने भ्रान्तिं मानिनि जानीहि केवलां मेऽत्र।
व्याख्यानतो विशेषप्रतिपत्तिः पाणिनीय इव॥ २॥

गोत्रेति। हे मानिनि, गोत्रस्खलने गोत्रं नाम तस्य स्खलने च्यवने मे मम केवलां भ्रान्तिं जानीहि। ननु गोत्रस्खलनं त्वदुक्तिः। मया भ्रान्त्या तन्नामग्रहणं कृतं न त्वहर्निशं तस्यामासक्तिरित्यपि त्वदुक्तिरेव। तत्र क्व प्रामाण्यमुररीकर्तव्यम्। तत्राह—व्याख्यानतो विशिष्टादाख्यानाद्विशेषस्येष्टस्य प्रतिपत्तिर्बोधः। किमत्र मानं तत्रोपमारीत्याह—पाणिनीय इव। पाणिनीये तत्प्रोक्तशास्त्रे। एवं हि तत्रोक्तिः—लण्अइउण्सूत्रयोर्णकारस्यैवोपादानेन अण्इण्ग्रहणेषु संदेहः। तत्राह—'व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्'। व्याख्यानाच्छिष्टकृताद्विशेषस्यान्यतरार्थस्य प्रतिपत्तिर्निश्चयः। हि यतः संदेहाच्छास्त्रमननुष्ठापकं न। 'अणुदित्-' इत्यत्रैव परेण णकारेणाण्प्रत्याहारः। इण् तु सर्वत्र परेण। यदत्र परिभाषेन्दुशेखरे दूषणं तदस्मत्कृते विद्याविलासे द्रष्टव्यम्। अत्र श्लेषालंकारः—'श्लेषः स एकवाक्येऽस्मिन्यत्रानेकार्थता भवेत्' इति लक्षणात्। अत्र प्रमाणालंकारेषु शब्दप्रमाणालंकारः। श्रौती पूर्णोपमा—'साधर्म्यमुपमा भेदे पूर्णा लुप्ता च साग्रिमा। श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा॥' इति लक्षणात्। काव्यादर्शे तु दण्डिनेयं धर्मोपमेति व्यवहृता—'इति धर्मोपमा साक्षात्तुल्यधर्मनिदर्शनात्'। मानवत्यत्र नायिका। मानश्चात्रेर्ष्याजन्यः—'पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते। ईर्ष्यामानो भवेत्स्त्रीणां तत्र त्वनुमितिस्त्रिधा॥' इति रसरत्नहारः। स च मध्यमः—'मानो लघुर्मध्यमश्च गुरुश्चेति त्रिधा भवेत्। अपरस्त्रीदर्शनोत्थो गोत्रस्खलनजस्तथा। अन्यस्त्रीसङ्गजनितः क्रमेण त्रिविधो भवेत्॥' इत्यपि तत्रैव। पथ्यार्या छन्दः—'त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः। पथ्येति नाम तस्याः प्रकीर्तितं नागराजेन॥' इति लक्षणात्॥

अन्यसंभोगदुःखितां प्रति संभुक्तसख्येवाह—

नौष्ठव्रणान्मामपरामिव त्वमवेहि तामेव निजैकदासीम्।
न चैकदेशो विकृतेरुपैति भिन्नत्वमङ्गे सखि कोऽपि लोके॥ ३॥

नौष्ठेति। ओष्ठे व्रणोऽधरपानजस्तस्मान्मामपरां सपत्नीमिव मा अवेहि। अङ्गे सखि, एकदेशे विकृतेर्विकारान्न कोऽपि भिन्नत्वमुपैति प्राप्नोति। नहि छिन्नपुच्छे शुनि मार्जारव्यवहारो लोके। 'लोकन्यायसिद्धेयम्' इति व्याकरणेऽप्युक्तम्। इयं ज्ञापकसिद्धापि। 'प्राग्दीव्यतोऽण्' इति सूत्रे भाष्ये दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिदमित्युक्त्वा किमर्थं विकृतनिर्देशः। एतदेव ज्ञापयत्याचार्यः—भवत्येषा परिभाषा—

'एकदेशविकृतमनन्यवत्' इति । तेन निर्जरशब्दे जरसादेशः फलम् । अत्र-त्यमपि दूषणं विद्याविलासे द्रष्टव्यम् । काव्यलिङ्गमलंकारः—'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्' इति लक्षणात् ॥

पूर्वमीर्ष्यामानेऽनुनीता पुनः प्रणयमानिनीं प्रत्याह—

अनुनीता पुना रोषं भेजे तामाह मानिनीम् ।
एकस्यां लक्षणं व्यक्तौ सकृदेव प्रवर्तते ॥ ४ ॥

अनुनीतेति । या पूर्वमनुनीता पुना रोषं भेजे । अत्र 'रो रि' इति लोपे कृते 'ढ्र-लोपे—' इति दीर्घः । तामाह नायकः एकस्या व्यक्तौ एकं लक्षणं सकृदेव एकवार-मेव प्रवर्तते । पुनः कोपो न योग्य इति भावः । प्रणयमानिनीयम् । 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' । अत्र ज्ञापकं 'समः सुटि' इति सूत्रम् । 'समो वा लोपमेके' इति भाष्येण लोपस्यापि रुप्रकरणस्थत्वान्मकारलोपे एकसकारके पुनस्तत्र सकारद्वित्वे द्वि-सकारके पुनः सकारद्वित्वे त्रिसकारकरूपसिद्धौ किं सूत्रेणेति तदेव ज्ञापकम् । फलं तु—सुध्युपास्य इत्यत्र धकारद्वित्वे पुनर्धकारद्वित्वं न । युग्मविपुला च च्छन्दः—'यस्यां लः सप्तमो युग्मे सा युग्मविपुला' इति लक्षणात् ॥

सख्युपभोगेन साशङ्का नायिका गौणमुख्यन्यायं मनसि निधाय दासीं धृष्टस्य सेवने योजयामासेति वर्णयति—

मुख्ये कार्यस्य विज्ञानाद्दासीं धृष्टस्य सेवने ।
नियोजयामास तयो रतिं ज्ञात्वा चुकोप सा ॥ ५ ॥

मुख्य इति । मुख्ये प्रधाने कार्यस्य विधेयस्य विज्ञानाद्दासीं धृष्टस्य प्रगल्भस्य सेवने नियोजयामास । सा तयो रतिं ज्ञात्वा चुकोप सरोषा बभूव । परकीयान्यसंभोगदुः-खिता नायिका । नन्वेवमपि महद्भूतश्चन्द्रमा इत्यत्र 'आन्महतः' इत्यात्त्वापत्तिरत आह—'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' । गुणादागतो गौणः । यथा गोशब्दस्य जाड्यादिगुण-निमित्तोऽर्थो वाहीकः । अप्रसिद्धश्च सत्रादिरपि तद्गुणारोपादेव बुध्यते । मुखमिव प्रधा-नत्वान्मुख्यः । प्रधान इत्यर्थः । गौणे ह्यर्थे शब्दः प्रयुज्यमानो मुख्यार्थारोपेण प्रवर्तते । एवं चाप्रसिद्धत्वं गौणलाक्षणिकत्वं चात्र गौणत्वम् । तेन प्रियत्रयाणामित्यादौ त्रया-देशो भवत्येव । तत्र त्रिशब्दार्थस्येतरविशेषणत्वेऽप्युक्तरूपगौणत्वाभावात् । अन्ये तु 'प-रिवेविषीध्वमित्यत्र ढत्वव्यावृत्तये क्रियमाणात् 'इणः षीध्व—' इत्यत्राङ्ग्रहणादर्थव-त्परिभाषानित्या । तन्मूलकमिदम्' इत्याहुः ॥

दासी नायिकायाः सान्त्वनं करोति—

यदागमास्तद्गुणास्ते गृह्यन्ते तद्ग्रहाङ्किते ।
अतस्त्वय्यावद्धभावो मामैक्षत स सादरम् ॥ ६ ॥

यदागमा इति । यत्सकाशादागमो येषां ते यदागमाः, तस्य यत्सकाशादागमस्तद्गुणी-

भूता अद्गभूतास्तद्ग्रहात्ते गृह्यन्ते। अतस्त्वय्याबद्धभावः स नायको मां सादरमैक्षत ।
ननु प्रणिदापयतीत्यादौ दारूपस्य विधीयमाना घुसंज्ञा दापेर्न स्यादत आह—'यदागमा-
स्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते'। यमुद्दिश्यागमो विहितः स तद्गुणीभूतः शास्त्रेण तदव-
यवत्वेन बोधितोऽतस्तद्ग्रहणेन तद्ग्राहकेण तद्बोधकेन शब्देन गृह्यते बोध्यत इत्यर्थः। तत्र
तद्गुणीभूता इत्यंशो बीजकथनम्। लोकेऽपि देवदत्तस्याङ्गाधिक्ये तद्विशिष्टस्यैव देवदत्त-
ग्रहणेन ग्रहण दृश्यते। यमुद्दिश्य विहित इत्युक्तेः। प्रनिदारयतीत्यादौ न दारित्यस्य घु-
त्वम्। आने मुग्विधानसामर्थ्यादेपानित्या। अन्यथा पचमान इत्यादावकारस्य मुक्य-
नया परिभाषया विशिष्टस्य सवर्णदीर्घे तद्वैयर्थ्यं स्पष्टमेव। तेन दिदीपे इत्यादौ यणा-
दिक न। जहारेत्यादौ 'आत औ णलः' इति न॥

रतान्तं वर्णयति—मृष्टाधरेति युग्मेन।

मृष्टाधरालक्तमनञ्जनाक्षं पत्रावलीशेषविशेषशोभम्।
रतान्त आसेचनकं निपीय कान्ताननं कान्त उवाच कान्ताम्॥ ७॥
कृतेऽङ्गकार्ये पुनरङ्गकार्यं न जायते सुन्दरि दर्शनेऽपि।
ततो वृथैषोऽस्ति परिश्रमस्ते प्रसाधनार्थे करभोपमोरु॥ ८॥ (युग्मम्)

मृष्टोऽधरालक्तको यस्याः। अधरपानादित्यर्थः। अनञ्जने अक्षिणी यस्य। चुम्बनात्।
'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्। विधेयत्वाभावादविमृष्टविधेयांशदोषा-
भाव.। पत्रावल्याः पत्ररचनायाः शेषेण शोभा यस्य। पत्ररचनाच्युतिस्तु विपरीतसुरते
स्वेदोद्गमादित्यर्थः। आसेचनकम्। 'तदासेचनक तृप्तेर्नास्त्यन्तो यस्य दर्शनात्' इत्यमरः।
कान्ताननं निपीय सादर दृष्ट्वा प्रसाधनोद्यता नायिका प्रत्याह। करभोपमावूरू यस्या-
स्तत्संबोधनम्। 'करस्य करभो बहिः' इत्यमरः। 'ऊरूत्तरपदादौपम्ये' इत्यूङ् तु न।
उपमाशब्देन व्यवधानात्। एतेन 'धात्री कराभ्यां करभोपमोरु.' इति कालिदासप्रयो-
गोऽपि व्याख्यातः। हे सुन्दरि, अङ्गकार्ये अङ्गानां कार्ये प्रसाधने कृते पुनरङ्गकार्य प्र-
साधन नास्ति। अङ्गस्य कार्ये कृते पुनरङ्गस्य कार्यं न भवति। यथात्रैव सुन्दरीत्यत्र
संबुद्धौ 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वे कृते 'ह्रस्वस्य गुण.' इति गुणो न भवति। न
चात्र लक्षणप्रतिपदोक्तपरिभाषया निर्वाहः। हे चित्रगोऽग्रमित्यनेन विरोधापत्तेः। अत्र
ते प्रसाधनार्थे परिश्रमो वृथैव। ननु रतान्ते प्रसाधनवर्णनं न कविसंप्रदाय इति, तन्न।
'शान्ते मन्मथसगरे रणकृतां सत्कारमातन्वती वासोऽदाज्जघनस्य पीनकुचयोर्हारं श्रुतेः
कुण्डलम्। बिम्बोष्ठस्य च वीटिका सुनयना पाण्यो रणत्कङ्कणे पश्चाल्लम्बिनि केशपाश-
निचये युक्तो हि बन्धक्रम.॥' इति दर्शनात्। यत्तु तत्त्वबोधिन्याम् 'ह्रस्वविधानसा-
मर्थ्याद्गुणो न प्रवर्तते अन्यथा 'अम्बार्थनद्योर्गुणः' इति ब्रूयात्', तन्न। सति गुणग्रहणे
इक्परिभाषोपस्थितेः अम्बार्थे दोषः। अथाम्बार्थग्रहणसामर्थ्यात्तत्रानिक्यपि प्रवृत्तिरिति
चेन्न। उभयत्र सामर्थ्यकल्पनापेक्षया अन्यार्थया परिभाषया निर्वाहस्य सुगमत्वात्।
तत्रैवान्ये तु कृते ह्रस्वे 'यदि गुण इष्टस्तर्हि अम्बार्थानां ह्रस्वो नदीह्रस्वयोर्गुणः' इत्येव

ब्रूयात् । तदपि न । 'ज्ञसि च' इति सूत्रे एकदेशानुवृत्तिकल्पनापत्तेः । अस्यां परिभाषायां ज्ञापक 'ज्ञाजनोर्जा' इति जादेशविधानम्, 'ज्यादादीयसः' इत्यत्राकारविधान च । जकारादेशे कृते जानातीत्यत्र 'अतो दीर्घो यञि' इति ज्यायान् इत्यादौ अकृत्सार्व–' इति दीर्घे इष्टसिद्धौ किं दीर्घविधानेन । 'तयोर्य्वावचि–' इति, निर्देशादनित्यैषा परिभाषा । समास आर्थी धर्मलुप्तोपमा । काव्यादर्शे त्वियं वस्तूपमेति व्यवहृता—'इति प्रतीयमानैकधर्मा वस्तूपमैव सा' इति लक्षणात् । क्रमेणाधरचुम्बनाद्युत्कर्षदर्शनात्सारालंकारः—'उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते' इति तल्लक्षणात् ॥

कश्चन मानिनी दूतीं निराकरोति सनियोगशिष्टन्यायेन—

निवृत्तिस्ते संनियोगशिष्टन्यायेन नो कुतः ।
द्वयोर्मानोदये दूत्यास्तदनित्यत्वमुत्तरम् ॥ ९ ॥

निवृत्तिरिति । 'सनियोगशिष्टानां सह वा प्रवृत्ति. सह वा निवृत्ति' इति सनियोगशिष्टन्यायः । तत्सनियोगेनागता त्व तस्या निवृत्तौ त्व कथ न निवर्तसे । द्वयेर्मानोदये । दूत्या तदनित्यत्वमुत्तरम् । ननु पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यादौ 'द्विगोर्लुक्' इत्यणो लुकि 'लुक् तद्धित–' इति स्त्रीप्रत्ययलुकि आनुकः श्रवणापत्तिरत आह—'सनियोगशिष्टाना सह वा प्रवृत्तिः सह वा निवृत्ति.' । एवार्थो वाशब्दः । अत्र 'बिल्वकादिभ्यश्छस्य लुक्' इति सूत्रस्थछग्रहण ज्ञापकम् । तद्धि छमात्रस्य लुग्बोधनद्वारा कुकोऽनिवृत्तिर्यथा स्यादित्यर्थम् । कृतकुगागमा नडाद्यन्तर्गणा बिल्वादय एव तत्र निर्दिष्टा बिल्वकादिशब्देन । समुच्चयार्थचशब्दयोगेन विधेययोरेककालिकत्वैकदेशत्वनियमाय न्यायसिद्धापीय 'णाविष्ठवत्–' इत्यनेन पुवत्त्वविधानमेतदनित्यत्वज्ञापनार्थम् । अन्यथा एनीमाचष्टे. एतयतीत्यादौ टिलोपेनैव ङीन्निवृत्तौ सनियोगशिष्टपरिभाषया नस्यापि निवृत्तौ पुंवत्त्वस्यानावश्यकत्वात् । 'ज्ञापकसिद्ध न सर्वत्र' इति ज्ञापकसिद्धेयमनित्येति वा । अत्र परिभाषेन्दुशेखरे यद्दूषण तद्विद्याविलासे स्फुटम् ॥

दूती नायकं भर्त्सयन्त्याह—

कारोः शङ्खश्वेतकीर्तेर्व्युत्पत्तिस्तव कुत्रचित् ।
अव्युत्पत्ती रसे तेऽस्ति ततोऽसि त्वमुणादिवत् ॥ १० ॥

कारोरिति । कारोः शिल्पिनः । 'कृवापा–' इत्युण् । शङ्खवत्कम्बुवच्छ्वेता कीर्तिर्यस्य तादृशस्य । 'शमेः खः' अत्र सति व्युत्पत्तौ खस्येनादेशः स्यात् । इति हेतोरव्युत्पत्तिपक्षोऽपि । उणादयो व्युत्पन्नाः अव्युत्पन्नाश्च कुत्रचित् शिल्पादिविपये । रसे ते अव्युत्पत्ति. । ततस्त्वमुणादिवदसि । अव्युत्पत्ती रस इत्यत्र 'रोरि' इति लोपे 'ढ्रलोपे–' इति दीर्घः । यथा सख्यालकारः । 'यथासख्य क्रमेणैव क्रमिकाणा समन्वये' इति तल्लक्षणात् । तद्धिते आर्थी लुप्तोपमा ॥

निर्दिश्यमानस्यादेशाः संभवन्ति सुनो यतः ।
अतः प्रत्यादेशपात्रं रोषात्सैव न दूतिका ॥ ११ ॥

निर्दिश्यमानस्येति । हे सुनः सुनासिक, यतो निर्दिश्यमानस्यादेशाः संभवन्ति अतः प्रत्यादेशस्य निराकरणस्य । 'प्रत्यादेशो निराकृतिः' इत्यमरः । पात्रं सैव दूतिका । प्रकृते—सुन इत्यत्र 'पद्दन्–' इति सूत्रे निर्दिश्यमानस्य नासिकाशब्दस्य नसादेशः । न तु 'पदाङ्गाधिकारे' इति प्राप्तः सुनासिकाशब्दस्य नसादेशः । यद्वा समासान्तविधेरनित्यत्वेन 'अञ्नासिकायाः–' इत्यजभावेऽपि संनियोगशिष्टन्यायस्यानित्यत्वे प्रकृतसूत्रेण नसादेशः । नन्वेवमुदस्थादित्यादौ 'उदःस्थास्तम्भोः–' इति पूर्वसवर्णापत्तिरत आह— 'निर्दिश्यमानस्यादेशा भवन्ति' । 'षष्ठी स्थानेयोगा' इति सूत्रमावर्तते । तत्र द्वितीयस्यायमर्थः । षष्ठ्यन्तं निर्दिश्यमानमुच्चार्यमाणसजातीयमेव निर्दिश्यमानावयवरूपमेव वा स्थानेन स्थाननिरूपितसबन्धेन युज्यते न प्रतीयमानमित्यर्थः । तेनेदं सिद्धम् । अत्रत्य दूषणं विद्याविलासे द्रष्टव्यम् ॥

नायिकाया मानबीजमाह—

आगमानित्यता शब्दे उणाद्यादौ मनोहरा ।
मनोहरा न ते यस्मात्तन्नित्यत्वमतोऽर्थये ॥ १२ ॥

आगमेति । उणाद्यादौ शब्दे आगमाना ङमुडादीनामनित्यता मनोहरा । ते आगमस्यागतस्यानित्यता न मनोहरा । अतस्तन्नित्यत्वमर्थये । यथा 'उणादयो बहुलम्' इत्यत्र ङमुडागमोऽनित्यत्वान्न नैव तथा आगमो युक्तः । 'आगमशास्त्रमनित्यम्' इति परिभाषाखण्डनोद्धारोऽपि विद्याविलासे द्रष्टव्यः ॥

वेश्या वर्णयति—

अर्थवद्ग्रहणे यस्मान्नानर्थकपरिग्रहः ।
सुरूपधनिनोर्वेश्या गृह्णाति धनिनं ततः ॥ १३ ॥

अर्थवदिति । अर्थवतः सार्थस्य ग्रहणेऽनर्थकस्य व्यर्थस्य यतः परिग्रहो नास्ति ततो हेतोः सुरूपधनिनोर्मध्ये वेश्या धनिनो ग्रहणं करोति । अर्थवत्त्वादिति भावः । ननु प्रोढवानित्यत्र 'प्रादूहोढ–' इति वृद्धिः स्यादत आह—'अर्थवद्ग्रहणे नानर्थकस्य' । विशिष्टरूपोपादाने ङपस्थितार्थस्य विशेषणतयान्वयसंभवे त्यागे मानाभावोऽस्या मूलम् । 'व्रश्च–' इति सूत्रे राजेः पृथग्भ्राजिग्रहणमस्यां हि ज्ञापकम् ॥

काचन दूती नायकस्य समीपे गता, नायकस्य गोत्रस्खलनं जातम्, तदनुकरणमागत्य नायिकायाः समीपे कृतमसुं प्रसङ्ग वर्णयति—

गोत्रस्खलनानुकृतौ दृष्टारुणचक्षुषा दूती ।
इत्याहाशयमस्या अनुकरणं प्रकृतिवद्भवति ॥ १४ ॥

गोत्रेति। दूत्यग्रे नायककृतस्य गोत्रस्खलनस्यानुकृतावनुकरणे अरुणे चक्षुषी यस्यास्तया। कोपारुणचक्षुषेत्यर्थः। दूती दृष्टा। अस्या आशयमाह—अनुकरण प्रकृतिवद्भवतीति। यथा नायकोपरि कोपस्तथा मय्यपि शास्त्रप्राप्त। ननु 'क्षियः—' इत्यादौ इयङ् कथमत आह—'प्रकृतिवदनुकरण भवति'। क्षिय इति इयङ्निर्देशोऽस्या ज्ञापकः। तत्रैव प्रातिपदिकत्वनिबन्धनविभक्तिकरणादनित्या चेयम्। उपगीतिच्छन्दः॥

नायको दूतीमुखाद्गोत्रस्खलनश्रवणेन मानिनीं प्रत्याह—

नास्ति तदन्तग्रहणं संज्ञाविधौ प्रत्ययग्रहणे हि।
तस्माद्यथापराधं दण्ड्यो वध्यस्तु नैवाहम्॥ १५॥

नास्तीति। संज्ञा नाम, तद्विधौ प्रत्ययग्रहणे शपथग्रहणे तदन्तग्रहण तस्यापराधिनोऽन्तो नाशस्तस्य ग्रहणं नास्ति। हि यस्मात्। 'सज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना', 'प्रत्ययोऽधीनशपथज्ञानविश्वासवस्तुषु', 'अन्तो नाशो द्वयोर्मृत्युः' इति त्रिष्वमरः। तस्मादपराधमनतिक्रम्य यथापराधमह दण्ड्य, वध्यस्तु नैव। 'अन्यथावादशपथाद्यपनेयस्तु मध्यम' इति। 'मानो लघुर्मध्यमश्च गुरुश्चेति त्रिधा भवेत्। अपरस्त्रीदर्शनोत्थो गोत्रस्खलनजस्तथा। अपरस्त्रीसगमोत्थः क्रमेण त्रिविधो भवेत्॥' इति रसरत्नहारः। नन्वेवं 'तरप्तमपौ घः' इत्यादिना तरवन्तादेः सज्ञा स्यादत आह—'सज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति'। 'सुप्तिङन्त' इत्यन्तग्रहणमस्या ज्ञापकम्। गीतिच्छन्दः॥

पुनस्तामाह—

अनुदात्तेत्त्वप्रथितं युवति निबोधात्मनेपदमनित्यम्।
उदयति सविता चन्द्रो न निर्गतं यौवनं हि तथा॥ १६॥

अनुदात्तेति। हे युवति, अनुदात्ते मम हृदि ईत्व लक्ष्मीत्व यत्र तादृशत्वात्प्रथित ख्यातमात्मने स्वस्मै पद स्थानमनित्यं निबोध जानीहि। लक्ष्म्यपेक्षेय सुरूपेति पदप्राप्तिरनित्येत्यर्थः। हि यस्मान्निर्गतः सविता चन्द्रश्चोदयति निर्गत यौवन तथा न। 'उदात्तो दातृमहतो' इति विश्वप्रकाशः। 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्। चक्षिङो ङित्करणाज्ज्ञापकात्'। तेन प्रकृते उदयतीत्यत्रात्मनेपद न। अत्रत्यपरिभाषेन्दुशेखरदूषणोद्धारो विद्याविलासे स्फुटः। काव्यलिङ्गमलंकारः—'काव्यलिङ्ग हेतोर्वाक्यपदार्थता' इति तल्लक्षणात्। परिकरालकारोऽपि—'अलकारः परिकरः साभिप्राये विशेषणे' इति लक्षणात्। उपगीतिच्छन्दः॥

सर्वद्वन्द्वैकवद्भावः पाणिनीये विकल्पितः।
विहाय मामिति सखीं काप्याह प्रेमगर्विता॥ १७॥

सर्वेति। सर्वश्चासौ द्वन्द्वश्च। 'चार्थे द्वन्द्वः' इति विहित समास तस्यैकवद्भाव पाणिनीये विकल्पितः। 'सर्वो द्वन्द्वो विभाषैकवद्भवति'। द्वन्द्वसामान्येन स्वमिथुनप्राप्त परि-

हरति—मां विहाय। त्यक्त्वेत्यर्थः। 'स्त्रीपुंसोर्मिथुनं द्वन्द्वम्' इत्यमरः। कापि प्रेमगर्विता सखीं प्रत्याह। घटपटं घटपटौ इत्यादि सिद्धये आह—'सर्वद्वन्द्वो विभाषैकवद्भवति', 'द्वन्द्वश्च प्राणि–' इत्यादि प्रकरणाविषयः। सर्वो द्वन्द्व इत्यर्थः। 'चार्थे द्वन्द्व.' इति सूत्रेण समाहारेतरेतरयोगयोरविशेषेण द्वन्द्वविधानान्न्यायसिद्धेयम्। परिसंख्यालंकारोऽत्र—'परिसंख्या निषिध्यैकमेकस्मिन्वस्तु यन्त्रणम्' इति तल्लक्षणात्॥

तुल्ये वयसि रूपे च मयि मज्जति यन्मनः।
पत्युस्तत्कारणं ब्रूहि सख्यूचे भेदका गुणाः॥ १८॥

तुल्य इति। वयसि रूपे च तुल्ये सति मम सपत्न्याश्च। पत्युर्मनो यन्मयि निमज्जति तत्कारण ब्रूहि इति नायिकाप्रश्नः। गुणा दाक्षिण्यादयः। भेदका व्यावर्तकाः। उत्कर्षजनका इत्यर्थः। इति सख्या उत्तरम्। हेत्वलंकारोऽत्र—'हेतोर्हेतुमता सार्धं वर्णन हेतुरुच्यते' इति लक्षणात्॥

प्रेमगर्विता मानभाजो दूषयति—

कृतमपि कार्यं केचिन्निवर्तयन्तीह शास्त्रवत्प्रेम।
प्रायस्त एव पूज्या ये न प्रागेव कुर्वन्ति॥ १९॥

कृतमिति। केचित्कृतमपि प्रेम कार्यं शास्त्रवन्निवर्तयन्ति। तेभ्यस्त एव पूज्या ये प्रागेव न कुर्वन्ति। 'अकृतव्यूहाः पाणिनीया.' इति द्वयोर्मध्ये अकृतव्यूहा इति श्रेष्ठम्। 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायात्॥

दूत्युपभोगकामः कश्चन निवारयन्ती दूतीं प्रत्याह—

स संनिपातलक्षणो विधिर्विधूपमानने।
न मन्यतेऽधुना मया धुनोपि किं कराम्बुजम्॥ २०॥

सेति। हे विधूपममानन यस्याः, स संनिपातलक्षणो विधिरधुना मया न मन्यते। त्वं कराम्बुजं किं धुनोपि। तस्या अनित्यत्वात्। उपजीव्यविरोधोऽस्या मूलम्। 'कष्टाय क्रमणे' इति निर्देशादनित्या। उपमालंकारः। प्रमाणिकावृत्तम्—'प्रमाणिका जरौ लगौ' इति लक्षणात्। क्वचिन्नगस्वरूपिणीत्यस्याः संज्ञा॥

आकारयन्कामपि ना दृष्टः स्वप्रिययावदत्।
यत्संज्ञापूर्वकविधेरनित्यत्वमवेहि तत्॥ २१॥

आकारयन्निति। कोऽपि ना कामपि परस्त्रियं संज्ञया हस्तचेष्टया। 'संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना' इत्यमर.। आकारयन्स्वप्रियया दृष्टः सन्नित्यत्रवदत्। यत्संज्ञापूर्वकविधेरनित्यत्वं तदवेहि। 'ओर्गुणः' इत्यत्र 'ओरोत्' इति वक्तव्ये गुणोक्तिः संज्ञापूर्वकविधेरनित्यत्वं ज्ञापयति। तेन स्वायंभुवमिति सिद्धम्॥

स्थिरो न रागो दयिताजनस्य श्रुत्वेति वाचं दयितस्य नूनम्।
पर्जन्यवल्लक्षणसंप्रवृत्त्या स्वस्यामपीमं गुरुदोषमूहे॥ २२॥

स्थिरेति । नायिकायाः सखीं प्रत्युक्तिः । दयिताजनस्य रागः स्थिरो न इति दयितस्य प्रियस्य वाच श्रुत्वा पर्जन्यवल्लक्षणसंप्रवृत्त्या स्वस्यामपीम गुरुदोषमूहे । लिट उत्तमपुरुषैकवचनम् । 'पर्जन्यो मेघशक्रयोः' इति लक्ष्मीनिवासः । लोकसिद्धेयं परिभाषा ॥

ननु तथा सति को दोष इति चेदाशय' सख्यास्तन्निराकरणायाह—

पूर्वं ह्यपवादोऽभिनिविशते पश्चाद्भवति किलोत्सर्गः ।
इति मत्वा मम चेतः खिन्ते नित्यं सखि क्षणशः ॥ २३ ॥

पूर्वमिति । पूर्वमपवादोऽपवादशास्त्रमभिनिविशते । 'अभिनिविशश्च' इति कर्मसज्ञा, 'नेर्विशः' इत्यात्मनेपदम् । पश्चादुत्सर्गशास्त्रम् । पक्षेऽपवादो निन्दा । 'अवर्णाक्षेपनिर्वादपरीवादापवादवत्' इत्यमरः । उत्सर्गस्त्यागः । हे सखि, इति मत्वा मम चेतः क्षणशो नित्य खिन्ते खिद्यते । ननु दधतीत्यादावन्तरङ्गत्वादन्तादेशेऽल्विधौ स्थानिवत्त्वाभावाददादेशो न स्यादिति तद्वैयर्थ्यापत्तिरत आह—'पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ।' लक्षणैकचक्षुष्को हि अपवादविषय पर्यालोच्य तद्विषयत्वानिश्चये उत्सर्गेण तत्तलक्षण संस्करोति । अन्यथा विकल्पापत्तिरित्यर्थः । अभिनिविशन्त इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः । 'अपवादो यद्यन्यत्र' इति न्यायस्य तु नात्र प्राप्तिः । अन्तादेशाप्राप्तिविषये चारितार्थ्याभावात् । आर्याच्छन्दः ॥

सखी तां सान्त्वयति—

गणकार्यमनित्यं स्यादिति किं न श्रुतं त्वया ।
अनार्जवमतश्चित्तादपाकुरु कृपां कुरु ॥ २४ ॥

गणेति । गणकार्यं भ्वादिधातुगणकार्यमनित्यमिति त्वया न श्रुतम् । पक्षे गणस्य समुदायस्य कार्यम् । अतश्चित्तादनार्जवं कौटिल्यमपाकुरु कृपां कुरु । तनादित्वादेव सिद्धे कृञ्ग्रहण गणकार्यस्यानित्यत्वे लिङ्गम् । तेन 'न विश्वसेदविश्वस्तम्' इत्यादि सिद्धम् ॥

वार्णादाङ्गं बलीयः स्यादिति मत्वा विलासिनी ।
नोवाच वचनं किंचिदालिङ्गनमदान्मुदा ॥ २५ ॥

वार्णेति । वार्णाद्वर्णमयात्सतोषापादनादाङ्गं बलवदिति मत्वा सा न किंचिदुवाच । किं तु मुदा आलिङ्गन अदात् । पक्षे—वार्णाद्वर्णसंबन्धिकार्यादाङ्गमङ्गाधिकारीयकार्यं बलवत् । नन्वेवमियायेत्यादौ द्वित्वे कृतेऽन्तरङ्गत्वात्सवर्णदीर्घत्वे तदसिद्धिरत आह—'वार्णादाङ्ग बलीयो भवति ।' तेनान्तरङ्गमपि सवर्णदीर्घं बाधित्वा वृद्धिरिति तत्सिद्धिः । 'अभ्यासस्यासवर्णे' इतीयङ्विधायकसूत्रस्थमसवर्णग्रहणमस्या ज्ञापकम् । तद्धीयतुरित्यादावियङ्व्यावृत्त्यर्थम् ॥

यान्तं निशम्य कान्तं तद्गृहसविधेऽस्मि साशङ्का ।
एतां प्रतारयाति सा ज्ञापकसिद्धं न सर्वत्र ॥ २६ ॥

यान्तमिति। तस्याः सपत्न्या गृहसविधे तत्समीपे। 'सदेशाभ्याशसविधसमर्यादसदेशवत्' इत्यमरः। साशङ्कास्मि। एनां प्रतारयति सा दूती—ज्ञापकसिद्धं सर्वत्र न भवति। स्पष्टमेव पठितव्येऽनुमानाद्बोधनमसार्वत्रिकत्वार्थम्॥

काचिन्नायिका सपत्न्यासक्तं पतिं ज्ञात्वा कांचित्कार्मणकारिणीं प्रत्याह—

योगविभागाद्दृष्टा सिद्धिः स्वेष्टस्य पाणिनीयेऽपि।
तस्मात्तयोस्तमाचर मत्सौख्यं तावतैवार्ये॥ २७॥

योगेति। योगः सूत्र तस्य विभागाद्विभजनात्स्वेष्टस्याभिप्रेतलक्ष्यस्य सिद्धिः पाणिनीयेऽपि दृष्टा। पक्षे योगः सगतिः। 'योगः संनहनोपायध्यानसगतियुक्तिषु' इत्यमरः। तस्या विभागस्तस्माद्योगविभागादिष्टसिद्धेर्हेतोस्तयोः पतिसपत्न्योस्तं योगविभागमाचर। हे आर्ये हे पूज्ये, तावतैव मत्सौख्यम्। 'क्वचिद्योगविभागादिष्टसिद्धिः'। आर्याछन्दः॥

वर्णाश्रये प्रत्ययलक्षणं न रागोदये बन्धनमस्य पुंसः।
अभेदका अस्य गुणाः सुवाणि त्वया मया चापि किमत्र वाच्यम्॥ २८॥

वर्णाश्रयेति। अस्य पुंसो वर्णाश्रये वर्णो गौरादिः स आश्रयो यस्य तादृशो रागोदयो रागस्य प्रीतेरुदयस्तस्मिन्प्रत्ययलक्षण शपथलक्षणम्। 'प्रत्ययोऽधीनशपथ—' इत्यमरः। बन्धन न। हे सुवाणि, अस्य पुंसो गुणा अभेदकाः, न भेदकर्तारः। अत्रास्मिन्विषये त्वयापि किं वाच्यम्, मयापि किं वाच्यम्। ननु गवे हितं गोहितमित्यादौ प्रत्ययलक्षणेनावादेशाद्यापत्तिरत आह—'वर्णाश्रये नास्ति प्रत्ययलक्षणम्'। वर्णप्राधान्यविषयमेतत्। तत्त्वं च 'प्रत्ययलोपे—' इति सूत्रे स्थानिवदित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणं प्रत्ययस्येतराविशेषणत्वरूपं यत्र प्राधान्य तत्रैव प्रवृत्त्यर्थमेतत्सिद्धम्। उपजातिवृत्तम्॥

काचिद्दूती नायिकान्तराद्रुष्ट नायकं स्वनायिकासमीपे नेतुं वदति—

एकस्या आकृतेश्चरितः प्रयोगो न द्वितीयादेर्हि।
तस्यां रोषसमाप्तिर्जातानुसर मत्सखीं धीर॥ २९॥

एकस्या इति। एकस्या आकृतेश्चरितः कृतः प्रयोगो न द्वितीयस्याः। पक्षे—एकस्या गवाद्युदाहरणव्यक्तेश्चरितः प्रयोगो द्वितीयादेर्न। अतस्तस्यां रोषसमाप्तिर्जाता। हे धीर, त्व मत्सखीमनुसर। ननु गोषु चाश्वेषु च स्वामीत्यादिवद्गोष्वश्वानां च स्वामीत्यपि स्यात्। 'स्वामीश्वरा—' इति सूत्रेण षष्ठीसप्तम्योर्विधानादाह—'एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति'। यत्रान्याकृतिकरणे भिन्नत्वसंभावना तद्विषयोऽयं न्याय इत्यन्यत्र विस्तरः। आर्याछन्दः॥

द्विजराजो यथा भाति कण्ठे नक्षत्रमालया।
द्विजराजस्तथा भातु कण्ठे नक्षत्रमालया॥ ३०॥

द्विजराज इति। द्विजराजश्चन्द्रः कण्ठे समीपे नक्षत्रमालया नक्षत्रपरम्परया यथा

भाति शोभते, तथा द्विजराजो द्विजश्रेष्ठः पण्डितः कण्ठे नक्षत्रमालया नक्षत्रमालाख्येन ग्रन्थेन भातु । 'कण्ठो गले गलध्वाने समीपे च' इति विश्वप्रकाशः ॥

त्रिलोकचन्द्रात्मजकृष्णरामसूनोः कृतिः श्रीशिवरामनाम्नः ।
नक्षत्रमालेयमनल्पशोभां तनोतु सूरेः प्रथितास्तु दिक्षु ॥ ३१ ॥

त्रिलोकचन्द्रेति । त्रिलोकचन्द्रस्यात्मजः पुत्रः । 'आत्मजस्तनयः सूनुः' इत्यमरः । यः कृष्णरामः कृष्णरामाभिधस्तस्य सूनोः श्रीशिवरामनाम्नः कृतिरियं नक्षत्रमाला । 'सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः' इत्यमरः । सूरेः पण्डितस्य । 'धीमान्सूरिः कृती कृष्टिः' इत्यमरः । अनल्पशोभां तनोतु । दिक्षु प्रथिता प्रसिद्धा अस्तु ॥

परिश्रमो व्याकरणे काव्यादावपि यः कृतः ।
दिगियं दर्शिता तस्य शिवरामेण सन्मुदे ॥
लक्ष्मीकीर्ती रसामध्ये शिवरामप्रसादतः ।
कुरुतां वसतिं शक्रतुल्यभूपालपालिते ॥
ग्रन्थान्मया विरचितान्परिशीलयन्तु शीलान्विताः सुमनसो मनसो मुदे ते ।
यद्बह्निशोधितमनल्परुचा समेतं जाम्बूनदं [तदिह] मौल्यविशेषलभ्यम् ॥
काव्यानि पञ्च तनुतेऽपि च पञ्चसंख्याष्टीकास्तु सप्तदश चैक उणादिकोषः ।
भूपालभूषणमथो रसरत्नहारो विद्याविलास इनपूर्वशरत्फलावाः ॥
व्याख्या लक्ष्मीविलासाख्या लक्ष्मीप्रीत्यैव निर्मिता ।
यावन्नक्षत्रमालास्ति तावत्तिष्ठतु भूतले ॥

इति श्रीत्रिलोकचन्द्रात्मजकृष्णरामसूनुशिवरामत्रिपाठिकृता लक्ष्मीविलासाख्यटीका-समेता नक्षत्रमाला समाप्ता ।

---

## श्रीनीलकण्ठदीक्षितविरचितं
# कलिविडम्बनम् ।

न भेतव्यं न बोद्धव्यं न श्राव्यं वादिनो वचः ।
झटिति प्रतिवक्तव्यं सभासु विजिगीषुभिः ॥ १ ॥
असंभ्रमो विलज्जत्वमवज्ञा प्रतिवादिनि ।
हासो राज्ञः स्तवश्चेति पञ्चैते जयहेतवः ॥ २ ॥
उच्चैरुद्घोष्य[1] जेतव्यं मध्यस्थश्चेदपण्डितः ।
पण्डितो यदि तत्रैव पक्षपातोऽधिरोप्यताम् ॥ ३ ॥

---

१. 'उद्घुष्य' इति पाठः.

लाभो हेतुर्धनं साध्यं दृष्टान्तस्तु पुरोहितः।
आत्मोत्कर्षो निगमनमनुमानेष्वयं विधिः॥ ४॥
[1]अलभ्यं लप्स्यमानेन तत्त्वं जिज्ञासुना चिरम्।
जिगीषुणा ह्रियं त्यक्त्वा कार्यः कोलाहलो महान्॥ ५॥
पाठनैर्ग्रन्थनिर्माणैः प्रतिष्ठा तावदाप्यते।
[2]एवं च तथ्यव्युत्पत्तिरायुषोऽन्ते भवेन्न वा॥ ६॥
स्तोतारः के भविष्यन्ति मूर्खस्य जगतीतले।
न स्तौति चेत्स्वयं च स्वं कदा तस्यास्तु निर्वृतिः॥ ७॥
वाच्यतां समयोऽतीतः स्पष्टमग्रे भविष्यति।
इति पाठयतां ग्रन्थे काठिन्यं कुत्र [3]वर्तते॥ ८॥
अगतित्वमतिश्रद्धा ज्ञानाभासेन तृप्तता।
त्रयः शिष्यगुणा ह्येते मूर्खाचार्यस्य [4]भाग्यजाः॥ ९॥
यदि न क्वापि विद्यायां सर्वथा क्रमते मतिः।
मान्त्रिकास्तु भविष्यामो योगिनो यतयोऽपि वा॥ १०॥
[5]अविलम्बे कृत्यसिद्धौ मान्त्रिकैराप्यते यशः।
विलम्बे कर्मबाहुल्यं विख्याप्यावाप्यते धनम्॥ ११॥
सुखं सुखिषु [6]दुःखं च जीवनं दुःखशालिषु।
अनुग्रहायते येषां ते धन्याः खलु मान्त्रिकाः॥ १२॥
यावदज्ञानतो मौनमाचारो वा विलक्षणः।
तावन्माहात्म्यरूपेण पर्यवस्यति मान्त्रिके॥ १३॥
चारान्विचार्य दैवज्ञैर्वक्तव्यं [7]भूभुजां फलम्।
ग्रहचारपरिज्ञानं तेषामावश्यकं यतः॥ १४॥
पुत्र इत्येव पितरि कन्यकेत्येव मातरि।
गर्भप्रश्नेषु कथयन्दैवज्ञो विजयी भवेत्॥ १५॥

---

१. 'अभ्यास्यं लप्स्यमानेन' इति, 'अलभ्य लज्जमानेन' इति च पाठः. २. 'एव सतस्तु' इति पाठः ३. 'वर्तताम्' इति पाठः. ४. 'भाग्यत' इति पाठः. ५. 'अविलम्बेन ससिद्धौ' इति पाठः. ६. 'दु.खेऽपि' इति पाठः. ७. 'भूभृतां' इति पाठः.

आयुः प्रश्ने दीर्घमायुर्वाच्यं मौहूर्तिकैर्जनैः ।
जीवन्तो बहु मन्यन्ते मृताः प्रक्ष्यन्ति कं पुनः ॥ १६ ॥
सर्वं कोटिद्वयोपेतं सर्वं कालद्वयावधि ।
सर्वं व्यामिश्रमिव च वक्तव्यं दैवचिन्तकैः ॥ १७ ॥
निर्धनानां धनावाप्तिं धनिनामधिकं धनम् ।
ब्रुवाणाः सर्वथा ग्राह्या लोकैर्ज्यौतिपिका जनाः ॥ १८ ॥
शतस्य लाभे ताम्बूलं सहस्रस्य तु भोजनम् ।
दैवज्ञानामुपालम्भो नित्यः कार्यविपर्यये ॥ १९ ॥
अपि सागरपर्यन्ता विचेतव्या वसुंधरा ।
देशो ह्यरत्निमात्रोऽपि नास्ति दैवज्ञवर्जितः ॥ २० ॥
वारान्केचिद्ग्रहान्केचित्केचिदृक्षाणि जानते ।
त्रितयं ये विजानन्ति ते वाचस्पतयः स्वयम् ॥ २१ ॥
नैमित्तिकाः स्वप्नदृशो देवतोपासका इति ।
निसर्गशत्रवः सृष्टा दैवज्ञानाममी त्रयः ॥ २२ ॥
स्वस्थैरसाध्यरोगैश्च जन्तुभिर्नास्ति किंचन ।
कातरा दीर्घरोगाश्च भिषजां भाग्यहेतवः ॥ २३ ॥
नातिधैर्यं प्रदातव्यं नातिभीतिश्च रोगिणे ।
नैश्चिन्त्यान्नादिमे दानं नैराश्यादेव नान्तिमे ॥ २४ ॥
भैषज्यं तु यथाकामं पथ्यं तु कठिनं वदेत् ।
आरोग्यं वैद्यमाहात्म्यादन्यथात्वमपथ्यतः ॥ २५ ॥
निदानं रोगनामानि सात्म्यासात्म्ये चिकित्सितम् ।
सर्वमप्युपदेक्ष्यन्ति रोगिणः सदने स्त्रियः ॥ २६ ॥
जृम्भमाणेषु रोगेषु म्रियमाणेषु जन्तुषु ।
रोगतत्त्वेषु शनकैर्व्युत्पद्यन्ते चिकित्सकाः ॥ २७ ॥

---

१. 'सर्वदा' इति पाठः. २. 'नित्य' इति पाठः. ३ 'प्रादेशमात्रोऽपि' इति पाठः. ४. 'रोगिणि' इति पाठः. ५. 'भिषज्य तु' इति पाठः. ६. 'त्वनपथ्यत.' इति पाठः.

प्रवर्तनार्थमारम्भे मध्ये त्वौषधहेतवे।
बहुमानार्थमन्ते च जिहीर्षन्ति चिकित्सकाः॥ २८॥
लिप्समानेषु वैद्येषु चिरादासाद्य रोगिणम्।
दायादाः संप्ररोहन्ति दैवज्ञा मान्त्रिका अपि॥ २९॥
रोगस्योपक्रमे सान्त्वं मध्ये किंचिद्धनव्ययः।
शनैरनादरः शान्तौ स्नातो वैद्यं न पश्यति॥ ३०॥
दैवज्ञत्वं मान्त्रिकता भैषज्यं चाटुकौशलम्।
एकैकमर्थलाभाय द्वित्रियोगस्तु दुर्लभः॥ ३१॥
अनृतं चाटुवादश्च धनयोगो महानयम्।
सत्यं वैदुष्यमित्येष योगो दारिद्र्यकारकः॥ ३२॥
कातर्यं दुर्विनीतत्वं कार्पण्यमविवेकता।
सर्वं मार्जन्ति कवयः शालीनां मुष्टिकिंकराः॥ ३३॥
न कारणमपेक्षन्ते कवयः स्तोतुमुद्यताः।
किंचिदस्तुवतां तेषां जिह्वा फुरफुरायते॥ ३४॥
स्तुतं स्तुवन्ति कवयो न स्वतो गुणदर्शिनः।
कीटः कश्चिदलिर्नाम कियती तत्र वर्णना॥ ३५॥
एकैव कविता पुंसां ग्रामायाश्वाय हस्तिने।
अन्ततोऽन्नाय वस्त्राय ताम्बूलाय च कल्पते॥ ३६॥
शब्दाख्यमपरं ब्रह्म संदर्भेण परिष्कृतम्।
विक्रीयते कतिपयैर्वृथान्यैर्विनियुज्यते॥ ३७॥
वर्णयन्ति नराभासान्वाणीं लब्ध्वापि ये जनाः।
लब्ध्वापि कामधेनुं ते लाङ्गले विनियुञ्जते॥ ३८॥
प्रशंसन्तो नराभासान्प्रलपन्तोऽन्यथान्यथा।
कथं तरन्तु कवयः कामपारम्यवादिनः॥ ३९॥

---

१. 'लुप्यमानेषु' इति पाठः. २. 'शाकिनीमुष्टि–' इति पाठः. ३. 'घुरुघुरायते' इति पाठः.

यत्संदर्भे यदुल्लेखे यद्व्यङ्ग्ये निभृतं मनः ।
समाधेरपि तज्ज्यायः शंकरो यदि वर्ण्यते ॥ ४० ॥
गृहिणी भगिनी तस्याः श्वशुरौ श्याल इत्यपि ।
प्राणिनां कलिना सृष्टाः पञ्च प्राणा इमेऽपरे ॥ ४१ ॥
जामातरो भागिनेया मातुला दारबान्धवाः ।
अज्ञाता एव गृहिणां भक्षयन्त्याखुवद्गृहे ॥ ४२ ॥
मातुलस्य बलं माता जामातुर्दुहिता बलम् ।
श्वशुरस्य बलं भार्या स्वयमेवातिथेर्बलम् ॥ ४३ ॥
जामातुर्वक्रता तावद्यावच्छ्यालस्य बालता ।
[1]प्रबुद्धमात्रे सारल्यं प्रबुद्धेऽस्मिन्पलायनम् ॥ ४४ ॥
भार्या ज्येष्ठा शिशुः श्यालः श्वश्रूः स्वातन्त्र्यवर्तिनी ।
श्वशुरस्तु [2]प्रवासी च जामातुर्भा[3]ग्यकारणम् ॥ ४५ ॥
भूषणैर्वसनैः पात्रैः पुत्राणामुपलालनैः ।
सकृदागत्य गच्छन्ती कन्या निर्मार्ष्टि मन्दिरम् ॥ ४६ ॥
गृहिणी स्वजनं वक्ति शुष्काहारं मिताशनम् ।
पतिपक्ष्यांस्तु बह्वाशान्क्षीरपांस्तस्करानपि ॥ ४७ ॥
भार्ये द्वे पुत्रशालिन्यौ भगिनी पतिवर्जिता ।
अश्रान्तकलहो नाम योगोऽयं गृहमेधिनाम् ॥ ४८ ॥
भार्ये द्वे बहवः पुत्रा दारिद्र्यं रोगसंभवः ।
जीर्णौ च मातापितरावेकैकं नरकाधिकम् ॥ ४९ ॥
स्मृते सीदन्ति गात्राणि दृष्टे प्रज्ञा विनश्यति ।
अहो महदिदं भूतमुत्तमर्णाभिशब्दितम् ॥ ५० ॥
अन्तकोऽपि हि जन्तूनामन्तकालमपेक्षते ।
न कालनियमः कश्चिदुत्तमर्णस्य विद्यते ॥ ५१ ॥

---

१. 'प्रबुध्यमाने' इति पाठः. २. 'प्रवासीति' इति पाठः. ३. 'भाग्यधो...' इति पाठः.

न पश्यामो मुखे दंष्ट्रां न पाशं वा कराञ्चले ।
उत्तमर्णमवेक्ष्यैव तथाप्युद्विजते मनः ॥ ९२ ॥
शत्रौ सान्त्वं प्रतीकारः सर्वरोगेषु भेषजम् ।
मृत्योर्मृत्युंजयध्यानं दारिद्र्ये तु न किंचन ॥ ९३ ॥
शक्तिं करोति संचारे शीतोष्णे मर्षयत्यपि ।
दीपयत्युदरे वह्निं दारिद्र्यं परमौषधम् ॥ ९४ ॥
गिरं स्खलन्तीं मीलन्तीं दृष्टिं पादौ विसंस्थुलौ ।
प्रोत्साहयति याच्ञायां राजाज्ञेव दरिद्रता ॥ ९५ ॥
जीर्यन्ति राजविद्वेषा जीर्यन्त्यविहितान्यपि ।
आकिंचन्यबलाढ्यानामन्ततोऽश्मापि जीर्यति ॥ ९६ ॥
नास्य चोरा न पिशुना न दायादा न पार्थिवाः ।
दैन्यं राज्यादपि ज्यायो यदि तत्त्वं प्रबुध्यते[1] ॥ ९७ ॥
प्रकाशयत्यहंकारं प्रवर्तयति तस्करान् ।
प्रोत्साहयति दायादांल्लक्ष्मीः किंचिदुपस्थिता ॥ ९८ ॥
विडम्बयन्ति ये नित्यं विदग्धान्धनिनो जनान् ।
त एव तु विडम्ब्यन्ते श्रिया किंचिदुपेक्षिताः ॥ ९९ ॥
प्रामाण्यबुद्धिः स्तोत्रेषु देवताबुद्धिरात्मनि ।
कीटबुद्धिर्मनुष्येषु नूतनायाः श्रियः फलम् ॥ ६० ॥
शृण्वन्त एव पृच्छन्ति पश्यन्तोऽपि न जानते ।
विडम्बनानि धनिकाः स्तोत्राणीत्येव मन्वते ॥ ६१ ॥
आवृत्य श्रीमदेनान्धानन्योन्यकृतसंविदः ।
स्वैरं हसन्ति पार्श्वस्था बालोन्मत्तपिशाचवत् ॥ ६२ ॥
स्तोतव्यैः स्तूयते नित्यं सेवनीयैश्च सेव्यते ।
न बिभेति न जिह्रेति तथापि धनिको जनः ॥ ६३ ॥
क्षणमात्रं ग्रहावेशो याममात्रं सुरामदः ।
लक्ष्मीमदस्तु मूर्खाणामा देहमनुवर्तते ॥ ६४ ॥

---

1. 'विबुध्यते' इति पाठः.

श्रीमांसमर्धमासं वा चेष्टित्वा विनिवर्तते ।
विकारस्तु तदारब्धो नित्यं लशुनगन्धवत् ॥ ६५ ॥
कण्ठे मदः कोद्रवजो हृदि ताम्बूलजो मदः ।
लक्ष्मीमदस्तु सर्वाङ्गे पुत्रदारमुखेष्वपि ॥ ६६ ॥
यत्रासीदस्ति वा लक्ष्मीस्तत्रोन्मादः प्रवर्तताम् ।
कुलेऽप्यवतरत्येष कुष्ठापस्मारवत्कथम् ॥ ६७ ॥
अध्यापयन्ति शास्त्राणि तृणीकुर्वन्ति पण्डितान् ।
विस्मारयन्ति जातिं स्वां वराटाः पञ्चषाः करे ॥ ६८ ॥
बिभर्तु भृत्यान्धनिको दत्तां वा देयमर्थिषु ।
यावद्याचकसाधर्म्यं तावच्छोको न मृष्यति ॥ ६९ ॥
धनभारो हि लोकस्य पिशुनैरेव धार्यते ।
कथं ते तं लघूकर्तुं यतन्तेऽपरथा स्वतः ॥ ७० ॥
श्रमानुरूपं पिशुने किमुपक्रियते नृपैः ।
द्विगुणं त्रिगुणं चैवं कृतान्तो लालयिष्यति ॥ ७१ ॥
गोकर्णे भद्रकर्णे च जपो दुष्कर्मनाशनः ।
राजकर्णे जपः सद्यः सर्वकर्मविनाशनः ॥ ७२ ॥
न स्वार्थं किंचिदिच्छन्ति न प्रेर्यन्ते च केनचित् ।
परार्थेषु प्रवर्तन्ते शठाः सन्तश्च तुल्यवत् ॥ ७३ ॥
कालान्तरे ह्यनर्थाय गृध्रो गेहोपरि स्थितः ।
खलो गृहसमीपस्थः सद्योऽनर्थाय देहिनाम् ॥ ७४ ॥
शुष्कोपवासो धर्मेषु भैषज्येषु च लङ्घनम् ।
जपयज्ञश्च यज्ञेषु रोचते लोभशालिनाम् ॥ ७५ ॥
किं वक्ष्यतीति धनिको यावदुद्विजते मनः ।
किं भक्ष्यतीति लुब्धोऽपि तावदुद्विजते ततः ॥ ७६ ॥
सर्वमातिथ्यशास्त्रार्थं साक्षात्कुर्वन्ति लोभिनः ।
भिक्षाकवलमेकैकं ये हि पश्यन्ति मेरुवत् ॥ ७७ ॥

---

१. 'वापि' इति पाठः. २. 'धनिकात्' इति पाठः.

धनपालः पिशाचो हि दत्ते स्वामिन्युपस्थिते[1] ।
धनलुब्धः पिशाचस्तु न कस्मैचन दित्सति ॥ ७८ ॥
दातारोऽर्थिभिरर्थ्यन्ते दातृभिः पुनरर्थिनः ।
कर्तृकर्मव्यतीहारादहो निम्नोन्नतं कियत् ॥ ७९ ॥
स्वस्मिन्नसति नार्थस्य रक्षकः संभवेदिति ।
निश्चित्यैव स्वयमपि भुङ्क्ते लुब्धः कथंचन ॥ ८० ॥
प्रस्थास्यमानः[2] प्रविशेत्प्रतिष्ठेत्तु दिने दिने ।
विचित्रानुल्लिखेद्विघ्नांस्तिष्ठासुरतिथिश्चिरम् ॥ ८१ ॥
प्रदीयते विदुष्येकं कवौ दश नटे शतम् ।
सहस्रं दाम्भिके लोके श्रोत्रिये तु न किंचन ॥ ८२ ॥
घटकं सम्यगाराध्य वैराग्यं परमं वहेत् ।
यावदर्थाः प्रसिद्ध्यन्ति यावच्चापलमावृतम् ॥ ८३ ॥
एकतः सर्वशास्त्राणि तुलसीकाष्ठमेकतः ।
वक्तव्यं किंचिदित्युक्तं वस्तुतस्तुलसी वरा ॥ ८४ ॥
विस्मृतं वाहटेनेदं[3] तुलस्याः पठता गुणान् ।
विश्वसंमोहिनी वित्तदायिनीति गुणद्वयम् ॥ ८५ ॥
कौपीनं भसितालेपो दर्भा रुद्राक्षमालिका ।
मौनमेकासनं चेति मूर्खसंजीवनानि षट् ॥ ८६ ॥
वासः पुण्येषु तीर्थेषु प्रसिद्धश्च मृतो गुरुः ।
अध्यापनावृत्तयश्च कीर्तनीया धनार्थिभिः ॥ ८७ ॥
मन्त्रभ्रंशे संप्रदायः प्रयोगश्च्युतसंस्कृतौ ।
देशधर्मस्त्वनाचारे पृच्छतां सिद्धमुत्तरम् ॥ ८८ ॥
यथा जानन्ति बहवो यथा वक्ष्यन्ति दातरि ।
तथा धर्मं चरेत्सर्वं न वृथा धर्ममाचरेत् ॥ ८९ ॥
सदा जपपटो[4] हस्ते मध्ये मध्येऽक्षिमीलनम् ।
सर्वं ब्रह्मेति वादश्च सद्यः प्रत्ययहेतवः ॥ ९० ॥

---

१. 'उपागते' इति पाठः. २. 'प्रस्थाप्यमानः' इति पाठः. ३. वाहटो वाग्भटः अष्टाङ्गहृदयकर्ता. ४. 'जपस्रग्घस्ते च' इति पाठः.

आ मध्याह्नं नदीवासः समाजे देवतार्चनम् ।
सततं शुचिवेषश्चेत्येतद्दम्भस्य जीवितम् ॥ ९१ ॥
तावद्दीर्घं नित्यकर्म यावत्स्याद्द्रष्टृमेलनम् ।
तावत्संक्षिप्यते सर्वं यावद्द्रष्टा न विद्यते ॥ ९२ ॥
आनन्दबाष्परोमाञ्चौ यस्य स्वेच्छावशंवदौ ।
किं तस्य साधनैरन्यैः किंकराः सर्वपार्थिवाः ॥ ९३ ॥
दण्ड्यमाना विकुर्वन्ति लाल्यमानास्ततस्तराम् ।
दुर्जनानामतो न्याय्यं दूरादेव विसर्जनम् ॥ ९४ ॥
अदानमीषद्दानं च किंचित्कोपाय दुर्धियाम् ।
संपूर्णदानं प्रकृतिर्विरामो वैरकारणम् ॥ ९५ ॥
ज्यायानसंस्तवो दुष्टैरीर्ष्यायै संस्तवः किल ।
अपत्यसंबन्धविधिस्त्वनर्थायैव केवलम् ॥ ९६ ॥
ज्ञातेयं ज्ञानहीनत्वं पिशुनत्वं दरिद्रता ।
मिलन्ति यदि चत्वारि तद्दिशेऽपि नमो नमः ॥ ९७ ॥
परच्छिद्रेषु हृदयं परवार्तासु च श्रवः ।
परमर्मणि वाचं च खलानामसृजद्विधिः ॥ ९८ ॥
विषेण पुच्छलग्नेन वृश्चिकः प्राणिनामिव ।
कलिना दशमांशेन सर्वः कालोऽपि दारुणः ॥ ९९ ॥
यत्र भार्यागिरो वेदा यत्र धर्मोऽर्थसाधनम् ।
यत्र स्वप्रतिभा मानं तस्मै श्रीकलये नमः ॥ १०० ॥
काममस्तु जगत्सर्वं कालस्यास्य वशंवदम् ।
कालकाल[3]प्रपन्नानां कालः किं नः करिष्यति ॥ १०१ ॥
कविना नीलकण्ठेन कलेरेतद्विडम्बनम् ।
रचितं विदुषां प्रीत्यै राजास्थानानुमोदनम् ॥ १०२ ॥

इति श्रीनीलकण्ठदीक्षितविरचित कलिविडम्बनम् ।

---

१. 'पुनः' इति पाठः. २. 'मर्मसु' इति पाठः. ३. कालकालः शिव .

# श्रीसोमप्रभाचार्यविरचिता
# शृङ्गारवैराग्यतरङ्गिणी ।

सुखबोधिकया वृत्त्या समेता ।

---

श्रीपार्श्वनाथं प्रणिपत्य भक्त्या पुरि स्थितं श्रीफलवर्धिकायाम् ।
शृङ्गारवैराग्यतरङ्गिणी या व्याख्यानतो व्याक्रियते मया सा ॥

श्रीसोमप्रभाचार्यो वैराग्यवासनया शृङ्गारं दूषयन्तः शृङ्गारवैराग्यतरङ्गिणीनामानं ग्रन्थं कर्तुकामाः स्त्रीरूपं निन्द्यमिति प्रतिपादयन्त ऊचुः—

धर्मारामदवाग्निधूमलहरीलावण्यलीलाजुष-
स्तन्वङ्ग्या यमितान्विलोक्य तदहो वालान्किमुत्कण्ठसे ।
व्यालान्दर्शनतोऽपि मुक्तिनगरप्रस्थानविघ्नक्षमा-
न्मत्वा दूरममून्विमुञ्च कुशलं यद्यात्मनो वाञ्छसि ॥ १ ॥

अहो इत्याश्चर्ये । तन्वङ्ग्याः । तनुः सूक्ष्ममङ्गं यस्याः सा तन्वङ्गी । तस्याः स्त्रिया यमितान्बद्धान्वालान्केशान्विलोक्य दृष्ट्वा किमुत्कण्ठसे किमुत्कण्ठां करोषि। कथंभूतान्वालान् । धर्मारामदवाग्निधूमलहरीलावण्यलीलाजुषः । धर्म एवारामो वनं तत्र यो दवाग्निर्दावानलस्तस्य या धूमलहरी धूमश्रेणिस्तस्या यल्लावण्यं श्यामत्वं तस्य लीलां जुषन्ते सेवन्त इति लीलाजुषस्तान् । जुषी प्रीतिसेवनयोर्धातुः । दवाग्निधूमपङ्क्तिसदृशानित्यर्थः । अथ वैराग्यरसेन शृङ्गारं दूषयति—रे मनुष्य, यदि त्वमात्मनः स्वस्य कुशलं कल्याणं वाञ्छसि तदामून्वालान्व्यालान्सर्पान्मत्वा । कृष्णवर्णत्वाल्लम्बायमानत्वाच्च सर्पसादृश्यं वालानां युक्तमेव । दूरं विमुञ्च । दूरतस्त्यजेत्यर्थः । सर्पं दृष्ट्वा यथा दूरमेव पलायते तथा त्वमपि दूरं पलायस्वेत्यर्थः । किंभूतान्वालान् । दर्शनतोऽपि मुक्तिनगरप्रस्थानविघ्नक्षमान् । मुक्तिरेव नगरं तत्र यत्प्रस्थानं गमनं तत्र विघ्नाय विघ्नं कर्तुं क्षमाः समर्थास्तान् । सर्पस्य दर्शनादेव गमने विघ्नसमुत्पत्तिरिति शकुनशास्त्रे प्रसिद्धम् । तन्वङ्ग्या यमितान्वालान्व्यालाञ्जानीहि । तथाहि । श्लेषार्थोऽयम्—यकार इताः प्राप्ताः संयुक्ता वा वाला व्याला भवन्तीति युक्तमेव वालानां व्यालत्वम् । इदं शार्दूलविक्रीडितं नाम च्छन्दः । इति प्रथमपद्यार्थसंकोचः ॥

ये केशा लसिताः सरोरुहदृशां चारित्रचन्द्रप्रभा-
भ्रंशाम्भोदसहोदरास्तव सखे चेतश्चमत्कारिणः ।

---

१. श्वेताम्बरजैनोऽयं सोमप्रभाचार्यः. नास्य देशकालौ ज्ञायेते. २. 'विलोकितुमहो' इति मूलपुस्तकपाठः. ३. 'विमुक्तिनगर' इति मूलपुस्तकपाठः.

क्लेशान्मूर्तिमतोऽवगम्य[1] नियतं दूरेण तानुत्सृजे-
र्नो चेत्कष्टपरम्परापरिचितः शोच्यां दशामेष्यसि ॥ २ ॥

हे सखे, सरोरुहदृशा सरोरुहाणि कमलानीव दृशो नेत्राणि यासा ताः सरोरुहदृश-स्तासां स्त्रीणां ये लसिता देदीप्यमानाः केशास्तव चेतश्चमत्कारिणश्चित्तप्रसक्तिकारिणः । वर्तन्त इति शेषः । किंभूताः केशाः । चारित्रचन्द्रप्रभाभ्रशाम्भोदसहोदराः । चारित्र-मेव चन्द्रप्रभा ज्योत्स्ना तस्या भ्रशे नाशने अम्भोदो मेघस्तस्य सहोदराः सदृक्षा । केशाना श्यामत्वादम्भोदसदृशत्वम् । तान्केशान्मूर्तिमतश्चक्षुरिन्द्रियगम्यान्क्लेशान् । नियतं निश्चयेनावगम्य बुद्ध्वा दूरेण दूरादेव त्वमुत्सृजेस्त्यजे. । नो चेदिति यदि न त्य-जसि तदा त्वं शोच्यां शोचनीया दशामवस्थामेष्यसि प्राप्स्यसि । किंभूतस्त्वम् । कष्ट-परम्परापरिचित. कष्टानां या परम्परा श्रेणिस्तया परिचितो युक्त । स्त्रीणा केशा-न्क्लेशाञ्ज्ञात्वा त्यजेत्यर्थ. । केशाः क्लेशाः कथ स्युरिति प्रश्ने । लसिताः लेन लकारेण सिता बद्धाः केशाः क्लेशा भवन्तीत्यर्थः ॥

ये शुद्धबोधशशिखण्डनराहुचण्डा-
श्चित्तं हरन्ति तव वक्रकचाः कृशाङ्ग्याः ।
ते निश्चितं सुकृतमर्त्यविवेकदेह-
निर्दारणे ननु नवक्रकचाः स्फुरन्ति ॥ ३ ॥

हे पुमन्, कृशाङ्ग्या कृशं सूक्ष्ममङ्गं यस्याः सा तस्या ये वक्रकचा वक्रकेशास्तव चित्त हरन्ति । तव चेतसि चमत्कारमुत्पादयन्तीत्यर्थ । कथभूता वक्रकचाः । शुद्धबोधश-शिखण्डनराहुचण्डाः । शुद्धबोधो निर्मलज्ञानं स एव शशी तस्य खण्डनेऽर्थात्कवलने राहु-रिव चण्डाः क्रूरा. शुद्धबोधशशिखण्डनराहुचण्डा. । फलितार्थस्तु राहुर्यथा चन्द्र ग्रा-सीकरोति तथा एते वक्रकचा ज्ञाननाशका इत्यर्थः । ननु निश्चित ते वक्रकचा. सुकृतम-र्त्यविवेकदेहनिर्दारणे । सुकृतमेव मर्त्यस्तस्य यो विवेक एव देहस्तस्य निर्दारणे नवक्र-कचाः । नवाश्च ते क्रकचाश्च नवक्रकचाः । नूतनकरपत्राणि । 'क्रकच पुनपुसकम् । करपत्र च' इति नामकोपः । स्फुरन्ति स्फुरद्रूपा वर्तन्ते इत्यर्थ । अत्र क्रकचाः नव-क्रकचा इति भिन्नश्लेष एव चमत्कार. । वसन्ततिलकाछन्दः ॥

अलंकृतं कुन्तलभारमस्या विलोक्य लोकः कुरुते प्रमोदम् ।
वैराग्यवीरच्छिदुरं दुरन्तममुं न किं पश्यसि कुन्तभारम् ॥ ४ ॥

अस्या नायिकायाः कुन्तलभारं बद्धकेशसमूहम् । 'कुन्तलाः सयता ये स्यु' इति कोप. । विलोक्य लोक. प्रमोद हर्षं कुरुते । कथभूत कुन्तलभारम् । अलकृत पुष्पा-दिना सस्कृतम् । अमु कुन्तलभारं कुन्तभारम् । 'कुन्तः प्रासोऽथ मुद्गर.' इति नाम-

---

1. 'अवगत्य नियत दूरे च' इति मूलपुस्तकपाठ..

कोपः । किं न पश्यसि । कथंभूत कुन्तभारम् । वैराग्यमेव वीरः सुभटस्तस्य छिदुरश्छेदनशीलस्तम् । पुनः कथभूत कुन्तभारम् । दुरन्तम् । दुष्टमन्तं प्रान्तं यस्य तम् । अन्ते तीक्ष्णत्वाद्दुःसहमित्यर्थः । कुन्तलभारः कुन्तभारः कथं स्यात् । न विद्यते लः लकारो यस्य सोऽलस्तं अल कृत विहितम् । लकाररहितः कुन्तलभारः कुन्तभारः स्यादेवेत्यर्थः । उपेन्द्रवज्रानाम च्छन्दः ॥

कस्तूरिकातिलकितं तुलिताष्टमीन्दु
चित्ते विचिन्तयसि सौख्यनिमित्तमेकम् ।
वामभ्रुवां यदलिकं तदहो अलीक-
मित्याख्ययैव परया [1]वदन्ति रूपम् ॥ ५ ॥

वामभ्रुवां स्त्रीणां यदलिकं ललाटमेकमद्वितीय सौख्यनिमित्तं सुखकारण चित्ते विचिन्तयसि । कथभूतमलिकम् । कस्तूरिकातिलकितम् । तिलकं जातं यस्य तत्तिलकितम् । कस्तूरिकया तिलकितम् । पुनः कथंभूतमलिकम् । तुलिताष्टमीन्दु । तुलितोऽष्टम्या इन्दुर्येन तत् । अष्टमीचन्द्रसदृशमित्यर्थः । अहो इत्याश्चर्ये । तदलिकं परया अन्यया आख्यया नाम्ना अलीकमिति रूपं वदन्ति बुधा. । 'गोधिर्ललाटालिके चालीकं श्रवणमस्त्रियाम्' इति नामकोपः । अलिकं अलीकमित्युभय नाम ललाटस्य । अलीकं मृषावचः । अलिकं अलीकं मिथ्या जानीहीत्यर्थं ॥

न भ्रूरियं पङ्कजलोचनायाश्चकास्ति शृङ्गाररसैकपात्रम् ।
भूः किं त्वसौ साधुतरा प्रसूते [2]निर्वन्धनं मोहविपद्रुमस्य ॥ ६ ॥

पङ्कजलोचनाया. कमलाक्ष्या इयं भ्रूर्न चकास्ति न शोभते । कथंभूता भ्रूः । शृङ्गाररसैकपात्रं शृङ्गाररसस्य एकमद्वितीयं पात्र स्थानम् । अजहल्लिङ्गत्वान्नपुंसकत्वम् । किं त्वसौ भ्रूः साधुतरा अतिशयेन साध्वी साधुतरा । तरतमेति पुवद्भावः । श्रेष्ठतरा भूः भूमिः सा मोहविपद्रुमस्य मोह एव विपद्रुमस्तस्य निवन्धन आविर्भावं प्रसूते उत्पादयति । भ्रूर्भू. कथमिति प्रश्ने सा प्रसिद्धा भ्रूः । धुतरा । धुतो गतो रो रेफो यस्या ईदृशी भ्रूर्भूर्भवतीत्यर्थः । इन्द्रवज्रानाम च्छन्दः ॥

[3]नवकुवलयदामश्यामलान्दृष्टिपाता-
न्कृतपरमदनाशान्विक्षिपत्यायताक्षी ।
इति वहसि मुदं कि मोहराजप्रयुक्ता-
न्प्रशमभटवधार्थं विद्धयमून्दृष्टिपातान् ॥ ७ ॥

---

१. 'वदति स्वरूपम्' इति मूलपुस्तकपाठः. २. 'निर्वन्धन' इति मूलपुस्तकपाठः. ३. 'मयि कुवलय' इति मूलपुस्तकपाठ..

आयताक्षी । आयते विस्तीर्णे अक्षिणी यस्याः सा एवंविधा मामुद्दिश्य दृष्टिपातान्कटाक्षान्विक्षिपति प्रयुङ्क्ते । किंविशिष्टान्दृष्टिपातान् । नवकुवलयदामश्यामलान् । नवानि यानि कुवलयानि तेषां दाम माला तद्वच्छ्यामलाः कृष्णास्तान्श्यामलान् । पुनः किंविशिष्टान्दृष्टिपातान् । कृतपरमदनाशान्कृतः परमदस्य नाशो यैस्तान् । इति मुदं हर्षं किं वहसि प्राप्नोषि । अमून्दृष्टिपातान्प्रशमभटवधार्थं प्रशमः शान्तिभावः स एव भटस्तस्य वधार्थम् । मोहराजप्रयुक्तान् । मोह एव राजा मोहराजः । राजाहःसखिभ्यष्टच् समासान्तः । तेन प्रयुक्तान् ऋष्टिपातान् तरवारिपातान् । 'तरवारिरपि द्वौ च ऋष्टिरिष्टी अखण्डकौ' इति नामकोषः । विद्धि जानीहि । दृष्टिपातान् ऋष्टिपातान् जानीहि । तत्कथम् । कृतपरमदनाशान् । कृतः परमः सर्वात्मना दस्य दकारस्य नाशो यत्र ते कृतपरमदनाशास्तान् । दृष्टिपातशब्दे दकारनाशे ऋष्टिपात इति स्यादेव । मालिनीनामच्छन्दः ॥

> तस्याः कोपपदं यदाननमहोरात्रं स्मरन्नात्मनः
>
> संतापं वितनोषि कानन महो ज्ञात्वा सखे तत्त्यजेः ।
>
> एतस्मिन्वसता[1] मनोभवमहासर्पेण दष्टः पुमा-
>
> न्कार्याकार्यविवेकशून्यहृदयः कस्को न संजायते[2] ॥ ८ ॥

हे सखे, तस्याः स्त्रिया यत् आननं मुखं अहोरात्रं स्मरन् स्मृतिविषयं कुर्वन् त्वं आत्मनः स्वस्य संतापं वितनोषि विस्तारयसि । कथंभूतं आननम् । कोपपदं कोपस्य पदं स्थानं तत् आननं अहो इति खेदे काननं वनं ज्ञात्वा त्वं त्यजेः । एतस्मिन्कानने वसता स्थितिं कुर्वता मनोभवमहासर्पेण मनोभवः कामः स एव महासर्पस्तेन पुमान् दष्टः सन् कस्कः । 'सर्वस्य द्वे' इति द्वित्वम् । कस्कादित्वात्सत्वम् । कार्याकार्यविवेकशून्यहृदयः । कार्यं चाकार्यं च कार्याकार्ये तयोर्विवेकस्तेन शून्यं हृदयं यस्य स तथा न संजायते । सर्पविषेण मूर्च्छितः पुमान् शून्यहृदयो भवति । अयं तु महासर्पेण दष्टस्तस्य किं वाच्यम् । आननं काननं कथमिति प्रश्ने । आननं कोपपदं कः ककार उपपदं यस्य तदा काननं स्यादेवेत्यर्थः ॥

> साकारमालोक्य मुखं तरुण्याः किं मुग्धबुद्धे मुदमादधासि ।
>
> इदं हि चित्तभ्रमनाटकस्य विचक्षणैरामुखमाचचक्षे ॥ ९ ॥

हे मुग्धबुद्धे, मुग्धा बुद्धिर्यस्य तत्संबोधनम् । तरुण्याः मुखं आलोक्य किं मुदं हर्षं आदधासि धारयसि । कथंभूतं मुखम् । साकारम् । आकारेण सह वर्तमानं साकारम् । सुन्दरमित्यर्थः । हि निश्चितं इदं मुखं विचक्षणैर्विद्वद्भिः चित्तभ्रमनाटकस्य चित्तभ्रम एव

---

१. 'येनास्मिन्' इति मूलपुस्तकपाठः. २. 'कः कोऽत्र नो जायते' इति मूलपुस्तकपाठः.

नाटकस्तस्य आमुखमाद्यारम्भ आचचक्षे इत्यत्र कर्मणि लिट्। मुखम् । आमुखं त्वि-त्थम्—साकार आकारेण सह वर्तमान मुख आमुखं स्यादित्यर्थः ॥

कामज्वरातुरमते तव सर्वदास्यं
वामभ्रुवां यदि कथंचिदवाप्तुमिच्छा ।
यत्नं विनाप्यखिलजन्मपरम्परासु
तज्जातमेव भवतो ननु सर्वदास्यम् ॥ १० ॥

हे कामज्वरातुरमते । कामज्वरेण आतुरा मतिर्यस्य तत्संबोधनं हे कामज्वरातुर-मते। सर्वदा सर्वस्मिन्काले यदि तव वामभ्रुवां स्त्रीणां आस्य मुखं कथचित्केनापि प्रकारेण अवाप्तु प्राप्तुमिच्छा वर्तते तदा ननु निश्चितं यत्न विनापि अखिलजन्मपरम्परासु। जन्मनः परम्परा' श्रेणयः। अखिला या जन्मपरम्परास्तासु 'भवतस्तव' सर्वदास्यम्। दासस्य भावो दास्य सर्वेषा भृत्यत्व जातमेव । स्त्रीमुखदत्तचित्तस्य तव सर्वजनानां दासत्व जातमेव । अत्र पद्ये उभयत्र सर्वदास्यमिति पदस्य भिन्नार्थत्वमेव चित्रम् । वसन्ततिलका नाम च्छन्दः ॥

तस्याः साधुरदं विलोक्य वदनं यः संश्रयत्यञ्जसा
मुक्त्वा मुक्तिपथं हहा प्रविशति भ्रान्त्या सदुर्गं वनम् ।
तच्चात्यन्तमचारुबद्धवसतिर्येनात्र रागादिभि-
श्चौरैर्धर्मधनापहारकरणात्कष्टं न किं प्राप्यते ॥ ११ ॥

यः पुमान् तस्याः स्त्रिया वदनं मुखं साधुरदं साधवः समीचीना रदा यस्मिन् तत् तथा विलोक्य अञ्जसा वेगेन संश्रयति आश्रयति स पुमान् हहा इति खेदे । मुक्तिपथ मुक्तिमार्गं मुक्त्वा भ्रान्त्या भ्रमेण दुर्गं दुःखेन गमनार्ह वनं प्रविशति । तद्वनं अत्यन्त अन्तमतिक्रान्तम् । अप्रमाणमित्यर्थः। कथभूतः सः। अचारुबद्धवसतिः। न चारुरचारुः बद्धा वसतिर्येन सः। येन वन प्रविशता पुरुषेण अत्र वने कष्ट किं न प्राप्यते। कस्मात्। रागादिभिश्चौरैर्धर्मधनापहारकरणात्। धर्म एव धनं धर्मधन तस्यापहारः हरण तस्य करण तस्मात्। चोरा हि धनमपहृत्य वन प्रविशन्ति तदा कष्टं स्पष्टमेव । तत्र वदन कथं वनमिति प्रश्ने। यः साधुः अद न विद्यते। दकारो यस्मिन् तत् अदम्। दकाररहित वदनं वन स्यादेव ॥

यियाससि भवोदधेर्यदि तटं तदेणीदृशा-
महीनमधरं धरं परिहरेः परं दूरतः ।

---

१. 'विघ्नपरम्परासु' इति मूलपुस्तकपाठः. २. 'यत्रात्यन्त' इति मूलपुस्तकपाठः. ३. 'प्रापितः' इति मूलपुस्तकपाठः.

ईहास्फलनतोऽन्यथा विशदवासनानौस्तव
व्रजिष्यति विशीर्णतां न भविता ततो वाञ्छितम् ॥ १२ ॥

हे पुमन्, यदि त्वं भवोदधेः ससारसमुद्रस्य तटं पार यियाससि यातुमिच्छसि । यातेः सन्नन्तान्मध्यमपुरुषैकवचनरूपम् । तदा एणीदृशां एणी हरिणी तस्या दृग इव दृगो यासां तास्तासां अधरं धरं पर्वत दूरतो दूरात्परं त्व परिहरेः । किंभूतमधरम् । अहीन परिपूर्णं अमृतादिना । अन्यथा यदि न परिहरसि तर्हि इह पर्वते आस्फलनतः सघट्टनात् तव विशदवासना निर्मलवासना सैव नौः विशीर्णतां भङ्गतां व्रजिष्यति । ततस्त्वद्वाञ्छितं न भविता न भविष्यति । यथा समुद्रमध्ये पर्वतास्फलनान्नावि भग्नायां वाञ्छितं न भवेत्तथेत्यर्थः । अधर धरं कथमिति प्रश्ने उत्तरम् । अहीन एन अकारेण हीन अधरं धर स्यादेव । 'सानुमान्पर्वतो धर.' । 'धरः शैलस्तथोदयः' इति कोष. । पृथ्वीनाम च्छन्दः ॥

न भातीदं भ्रातः स्फुरदरुणरत्नौघकिरण-
प्रतानं तन्वङ्ग्यास्तरलतरलं कुण्डलयुगम् ।
दमं दुग्धं पुंसामिह विरहसंयोगदशयो-
र्ज्वलच्छोकानङ्गज्वलनयुगिदं कुण्डयुगलम् ॥ १३ ॥

हे भ्रात., तन्वङ्ग्याः कृशाङ्ग्या इव कुण्डलयुगं कुण्डलस्य कर्णाभरणस्य युग न भाति न शोभते । कथभूत कुण्डलयुगम् । स्फुरदरुणरत्नौघकिरणप्रतान स्फुरन्तो देदीप्यमाना ये अरुणरत्नौघा रक्तरत्नसमूहास्तेषां ये किरणास्तेषा प्रतान समूहो यस्मिस्तत् । पुनः कथभूत कुण्डलयुगम् । तरलतरलम् । तरलाचञ्चलात्तरल चञ्चलम् । चञ्चलतरमित्यर्थः । कथभूत कुण्डलयुगलम् । विरहसयोगदशयोः । स्त्रीपुंसयोः सयोगाभावाद्विरहोत्पत्तिः । विरहश्च सयोगश्च विरहसंयोगौ तयोर्दशे अवस्थे तयोः । शोकानङ्गज्वलनयुक् । शोकश्चानङ्गज्वलनश्च शोकानङ्गज्वलनौ ताभ्या युक् । विरहे शोकाविर्भाव , सयोगे कामाग्नेराविर्भाव इत्यर्थः । कुण्डलयुगल किं कुर्वत् । इह ससारे पुसा पुरुषाणा दममुपशमं दुग्धं पय । ज्वलत्कुण्डलयुगं कुण्डयुगल कथ तत्रोच्यते । तरलतरलश्चञ्चलतरो लो लकारो यस्मिन् । कुण्डशब्दाल्लकारे कुण्डलयुगस्य चञ्चलत्वात् युगशब्दात्परत. स्थिते सति कुण्डयुगल स्यादित्यर्थः । शिखरिणी नाम च्छन्दः ॥

ताडङ्कं सस्पृहं तस्याः पश्यन्मूढः परे भवे ।
नरो नरकपालेभ्यस्ताडं कं न सहिष्यते ॥ १४ ॥

---

१. 'इह स्खलनतो' इति मूलपुस्तकपाठः. २. 'दग्धु' इति मूलपुस्तकपाठ एव समीचीनः. टीकाकारस्त्वशुद्धमेव व्याख्यातवान्. ३. 'सभोग' इति मूलपुस्तकपाठः. ४. 'युगद' इति मूलपुस्तकपाठ .

मूढो नरस्तस्याः स्त्रियाः सस्पृह साभिलाष यथा स्यात्तथा ताडङ्क कर्णभूषण पश्यन् परे भवे आगामिभवे नरकपालेभ्यः नरकान् पालयन्ति ते नरकपालास्तेभ्यः परमाधार्मिकेभ्यः कं ताड ताडन ताड आघातस्त क न सहिष्यते, अपि तु सर्व सहिष्यते । अनुष्टुप् च्छन्दः ॥

सारं गलं यदरविन्दविलोचनाना-
मालोक्य चेतसि मुदं कलयन्ति मूढाः ।
हा निश्चितं रचितमुक्तिपुरप्रवेश-
व्यासेधमर्गलममुं न विचारयन्ति ॥ १५ ॥

मूढा मूर्खा नरा अरविन्दविलोचनानां कमलनयनानां स्त्रीणा य सार श्रेष्ठं गल निगरणं विलोक्य । चेतसि मुदं हर्ष कलयन्ति प्राप्नुवन्ति । हा इति खेदे । निश्चितं नियमेन अमुं गल अर्गलं न विचारयन्ति । कथभूत अर्गलम् । रचितमुक्तिपुरप्रवेशव्यासेध रचितो विहितो मुक्तिनगरप्रवेशस्य व्यासेधो निषेधो येन स त रचितमुक्तिपुरप्रवेशव्यासेधम् । गलं अर्गलं त्वित्यम् । सार अरा अर्शब्देन सह वर्तते यः स सारस्तं सारम् । अर्सहितो गलः अर्गलः स्यादित्यर्थ. ॥

अलं प्राप्य स्पर्शं कुचकलशयोः पङ्कजदृशां
परां प्रीतिं भ्रातः कलयसि सुधामग्न इव किम् ।
अवस्कन्दं धर्मक्षितिपकटके दातुमनसा
प्रयुक्तं जानीयाः कलुषवरटेन स्पशमिमम् ॥ १६ ॥

पङ्कजदृशा कमलनयनानां स्त्रीणा कुचकलशयोः स्तनयोः अल अत्यर्थ स्पर्श प्राप्य हे भ्रातः, किं परामुत्कृष्टां प्रीतिं कलयसि प्राप्नोपि। क इव। सुधामग्न इव अमृते कृतमज्जन इव। इम स्पर्श कलुषवरटेन कलुपं पाप तदेव वरटो भिल्लस्तेन प्रयुक्त प्रेरितं स्पशं हेरिक त्वं जानीयाः । कथभूतेन कलुषवरटेन । धर्मक्षितिपकटके धर्म एव क्षितिपो राजा तस्य कटके सैन्ये अवस्कन्द प्रहरणं दातुमनसा । प्रहरण कर्तुमनसेत्यर्थः । स्पर्श स्पशं कथमिति । अल रलयोश्चैकत्वस्मरणात् अर नास्ति रो रेफो यत्र त अरम् । रेफरहितस्पर्शो स्पशं स्यादित्यर्थः ॥

पीनोन्नतं स्तनतटं मृगलोचनाया
आलोकसे नरहितं यदपूर्वमेतत् ।

---

१. 'यदरविन्द' इति मूलपुस्तकपाठः. २. 'तन्निश्चित' इति मूलपुस्तकपाठ.. ३. 'अर' इति मूलपुस्तक पाठः. ४. 'चरटेन' इति मूलपुस्तकपाठ.. ५. 'पीनोन्नत नरहित यदपूर्वमेतदालोकसे स्तनतटं मृगलोचनायाः' इति मूलपुस्तकपाठः.

मोहान्धकारनिकरक्षयकारणस्य
विद्यास्तदस्ततटमेव विवेकभानोः ॥ १७ ॥[1]

यत् मृगलोचनायाः हरिणाक्ष्याः स्त्रियाः एतत् स्तनतटं कुचद्वन्द्वं पीनोन्नतं पीनं च तदुन्नतं च पीनोन्नतम्, पुनः नरहितं नरेभ्यो हितम्, पुनः अपूर्वम् । प्रतिक्षणं चमत्कारहेतुत्वात् । त्वं आलोकसे पश्यसि, तत्स्तनतटं विवेकभानोः विवेकसूर्यस्य अस्ततटं त्वं विद्याः । अत्र ज्ञानसूर्योऽस्ततामेष्यतीत्यर्थः । कथंभूतस्य विवेकभानोः । मोहान्धकारनिकरक्षयकारणस्य मोह एवान्धकारस्तस्य यो निकरः समूहस्तस्य क्षयकारणं तस्य मोहान्धकारनिकरक्षयकारणस्य । स्तनतटमिति विशेषणद्वयेन अस्ततटं साधयति—नरहितं नेन नकारेण रहितम्, पुनः अपूर्वं अः अकारः पूर्वो यस्य तत् अपूर्वं एतादृशं स्तनतटं अस्ततटं स्यादेवेत्यर्थः ॥

कंदर्पद्विपकुम्भचारुणि कुचद्वन्द्वे मृगाक्ष्या मया
न्यस्तो हस्त इति प्रमोदमदिरामाद्यन्मना मा स्म भूः ।
किं त्वा जन्म यदर्जितं बहुविधामभ्यस्य कष्टक्रियां
हस्तोऽयं सुकृतस्य तस्य सहसादायीति संचिन्तयेः ॥ १८ ॥

मया मृगाक्ष्याः स्त्रियाः कुचद्वन्द्वे स्तनयुग्मे हस्तो न्यस्तः करः स्थापितः । कथंभूते कुचद्वन्द्वे । कंदर्पद्विपकुम्भचारुणि कंदर्प एव द्विपस्तस्य कुम्भो गण्डस्थलं तद्वच्चारु मनोज्ञं तस्मिन्कंदर्पद्विपकुम्भचारुणि । इति हेतोः प्रमोदमदिरामाद्यन्मनाः प्रकृष्टो यो मोदः स एव मदिरा तया माद्यन्मनो यस्य स एतादृशस्त्वं मा स्म भूः । 'माङि लुङ्' इति लुङ् । 'न माङ्योगे' इत्यडागमाभावः । किं तु बहुविधां तपोनुष्ठानादिरूपा कष्टक्रिया कष्टसाध्या क्रिया कष्टक्रिया तां कष्टक्रियाम् अभ्यस्य अभ्यासं कृत्वा आजन्म यदर्जितं जन्मनो मर्यादीकृत्य यत्सुकृतमर्जितं तस्य सुकृतस्य त्वया अयं हस्तो अदायि दत्तः । यथा कस्य आजिगमिषोः हस्तप्रदानं संज्ञया निषेधयति तथा हस्तदानेन सुकृतं निषिद्ध इति त्वं संचिन्तयेः विचारयेरित्यर्थः । अत्र पद्ये हस्तो न्यस्तः सुकृतस्य हस्तोऽदायीति चित्रकृत् ॥

कण्ठोपकण्ठे लुलितं विभावयेर्भुजं युवत्या भुजगं गराजितम् ।
एतस्य संस्पर्शवशादपि क्षणादशेषचैतन्यमुपैति संक्षयम् ॥ १९ ॥

---

१. मूलपुस्तकेऽस्मात्पद्यादनन्तरं 'एतस्या युवते पयोधरयुगं वल्गन्महात्मनिदं चक्रे योधयुगं विरञ्चिरपरं विश्वापकारोद्यतः । कुर्वद्वर्मगुणेष्वयोगमनतिक्रामन्निजां स्तब्धतां यद्दूरादपि कल्पयत्युपगमप्राणापनोदं नृणाम् ॥' अयं श्लोकोऽधिकोऽस्ति. अत्र अपरमन्यत्पयोधरयुगम्, अन्यत्र पकार-रेफरहितं पयोधरयुगं योधयुगं भवति. वर्मगुणेति धनुर्ज्यावाणेषु योगं सबन्धं न करोतीत्यर्थः

कण्ठोपकण्ठे लुलितं कण्ठस्य गलस्य समीपे कण्ठोपकण्ठे लुलितं वलित युवत्याः स्त्रिया भुजं बाहुं भुजगं सर्पं त्वं विभावयेर्जानीयाः । कथभूतं भुजगम् । गराजितं गरेण विषेण अजितो गराजितस्तम् । एतस्य भुजगस्य संस्पर्शवशात् स्पर्शमात्रेणापि अशेषं समस्तं चैतन्यं चेतनाया भाव. क्षणात् संक्षयं नाशं उपैति प्राप्नोति । यथा भुजगस्पर्शाच्चैतन्यं याति तथा युवत्या भुजस्पर्शादेव चैतन्यनाशः स्यादित्यर्थः । भुजं भुजगं कथं स्यादिति प्रश्ने भुजं गराजितं गेन गकारेण राजित भुजं भुजगं स्यादित्यर्थः । इन्द्रवशा नाम च्छन्दः ॥

कण्ठावसक्ते कुपिते नवाहौ वरं वहिःप्राणहरे प्रमोदः ।
विध्वस्तधर्मान्तरजीविते नुः स्त्रैणे न वाहौ विदुषां स युक्तः ॥ २० ॥

नुः पुरुषस्य नवाहौ नवश्चासावहिश्च नवाहिस्तस्मिन्नवीनसर्पे कण्ठावसक्ते कण्ठस्थापिते वरं श्रेष्ठम् । कथभूते नवाहौ । कुपिते क्रुद्धे । पुनः कथंभूते नवाहौ । वहिःप्राणहरे । वहिःप्राणान्हरतीति वहिःप्राणहरस्तस्मिन्बाह्यप्राणनाशके । स्त्रैणे स्त्रीणामयं स्त्रैणस्तस्मिन् । 'स्त्रीपुंसाभ्यां नञ्स्नञौ' इति नञ्प्रत्यये आदिवृद्धौ णत्वे स्त्रैणशब्दसिद्धिः । बाहौ भुजे कण्ठावसक्ते सति यः प्रमोदो हर्ष. स विदुषां पण्डितानां युक्तो न । कथंभूते बाहौ । विध्वस्तधर्मान्तरजीविते विध्वस्तं नाशितं धर्म एव अन्तरजीवितं येन तस्मिन् । अन्तरप्राणनाशक इत्यर्थः । अहिस्तु कण्ठावसक्तः सन् वहिःप्राणान्नाशयति, स्त्रीणा बाहुः कण्ठावसक्तः सन् अन्तरप्राणनाश विधत्ते । अतः सर्पादप्यधिकतरदुःखदं स्त्रीकृतालिङ्गनमित्यर्थः । अत्र नवाहावित्युभयत्र चित्रकृत् । बवयोरभेदस्तु आलंकारिकैरिष्ट एव ॥

कोऽयं विवेकस्तव यन्नतभ्रुवां दोषावगूढः प्रमदं विगाहसे ।
येतः[1] स्मरातङ्कपरीतचेतसां किं सुन्दरासुन्दरयोर्विवेचनम् ॥ २१ ॥

हे साधो, अयं तव को विवेकः यत् नतभ्रुवां नते नम्रीभूते भ्रुवौ यासां ता नतभ्रुवस्तासां स्त्रीणां दोषा बाहुनावगूढ आलिङ्गितः सन् त्वं प्रमदं प्रकृष्टमद विगाहसे प्राप्नोषीत्यर्थः । यतो यस्मात् स्मरातङ्कपरीतचेतसां स्मर. कामः स एव आतङ्को रोगस्तेन परीतं व्याप्तं चेतो येषा तेषां पुरुषाणा सुन्दरासुन्दरयोः समीचीनासमीचीनयोः किं विवेचनम् । अपस्मारादिरोगग्रस्तानां शुभाशुभे विवेको न भवतीति युक्तमेव । पक्षे दोषैरवगूढो दोषावगूढः । विवेकदोषयुक्त इत्यर्थः ॥

हंहो विलोक्य परमङ्गदमङ्गनाना-
मानन्दमुद्वहसि किं मदनान्धबुद्धे ।
सत्यं विवेकनिधनैकनिमित्तमेतै[3]-
न्मेधाविनो हि परमं गदमुद्गृणन्ति ॥ २२ ॥

---

१. 'तु' इति मूलपुस्तकपाठः. २. 'यद्वा' इति मूलपुस्तकपाठः. ३ 'एन' इति मूलपुस्तकपाठः.

हहो इति संबोधने । हे मदनान्धबुद्धे, मदनेन कामेन अन्धीभूता बुद्धिर्यस्य तस्य संबोधने । अङ्गनानां प्रधानमङ्गं यासां तासामङ्गनानां परमुत्कृष्टं अङ्गदं केयूरं विलोक्य दृष्ट्वा आनन्दं किमुद्वहसि प्राप्नोषि । मेधाविनः पण्डिता एतत् अङ्गदं परममुत्कृष्टं गदं रोगमुद्गृणन्ति प्रजल्पन्ति तत्सत्यम् । कथंभूतं गदम् । विवेकनिधनैकनिमित्तं विवेको ज्ञानं तस्य निधनस्य नाशनस्य एकमद्वितीयं निमित्तं कारणम् । गदो हि निधनैकहेतुर्भवत्येव । अत्र पद्ये उभयत्र परमङ्गदमिति पदं भिन्नार्थत्वाच्चित्रकृत् ॥

अयं जनो वलयभरं विलोकते मृगीदृशामधिभुजवल्लि बालिशः ।
न बुध्यते सुकृतचमूं जिगीषतः समुद्यतं बलभरमेनमेनसः ॥ २३ ॥

अयं प्रत्यक्षगतो बालिशो मूर्खो जनो मृगीदृशां स्त्रीणां वलयभरं वलयानां भरस्तं अधिभुजवल्लि भुजावेव वल्लिस्तस्यामिति अधिभुजवल्लि । विभक्त्यर्थेऽव्ययीभावः । भुजलतायामित्यर्थः । विलोकते पश्यति । एनं वलयभरं एनसः पापस्य समुद्यतं सावधानीभूतं बलभरं सेनासमूहं न बुध्यते । कथंभूतस्य एनसः । सुकृतचमूं सुकृतस्य शीलादेः चमूः सेना तां जिगीषतः जेतुमिच्छतः । कथं वलयभरं बलभरमिति तत्रोच्यते—कथंभूतं वलयभरम् । अयं न विद्यते यो यकारो यस्मिन् सः अयस्तमयम् । यकाररहितमित्यर्थः । रुचिरा नाम च्छन्दः ॥

ये दृक्पथे तव पतन्ति नितम्बिनीनां
कान्ताः करा जडिमपल्लवनप्रवीणाः ।
नो वेत्सि तान्किमपवर्गपुरप्रयाण-
प्रत्यूहकारणतया करकानवश्यम् ॥ २४ ॥

तव दृक्पथे दृष्टिमार्गे नितम्बिनीनां स्त्रीणां कान्ता मनोज्ञाः करा हस्ताः । नितम्बिनीनामिति संबन्धे बहुत्वात् करा इति बहुत्वम् । पतन्ति अवलोकनतां गच्छन्ति । कथंभूताः कराः । जडिमपल्लवनप्रवीणाः जडिम्नो जडतायाः यत्पल्लवनं प्रकटीकरणं तत्र प्रवीणाश्चतुराः । तान् करान् अवश्यं निश्चयेन करकान् घनोपलान् किं नो वेत्सि न जानासि । कया । अपवर्गपुरप्रयाणप्रत्यूहकारणतया अपवर्गो मोक्षः स एव पुरं नगरं तस्मिन् प्रयाणं गमनं तत्र यः प्रत्यूहो विघ्नस्तत्र यत्कारणं निदानं तस्य भावस्तत्ता तया अपवर्गपुरप्रयाणप्रत्यूहकारणतया । गमनकाले करकवृष्टिः स्वेष्टसिद्धौ विघ्नकारणं प्रसिद्धमेव । उक्तं च वसन्तराजशाकुने—'क्षीणचन्द्रतिथि दुःसहानलं दूषितं धरणिकम्पनादिना । पूर्ववज्जलदसंकुलाम्बरं वर्जयेच्छकुनदर्शने दिनम्' इति । अकालवृष्टिर्गमने निषिद्धा । करकपतनं त्ववश्यं वर्ज्यमेव । करान् करकान् कथमिति प्रश्नोत्तरम् । कथंभूताः कराः । कान्ताः ककारान्ता इत्यर्थः । तादृशाः कराः करका भवन्त्येवेत्यर्थः ॥

---

१. 'जिगीषतः सुकृतचमूं समुद्यतं न बुध्यते' इति मूलपुस्तकपाठः.

नीव्याप्तमस्या हरिणेक्षणाया यं वीक्ष्य हारं हृदि हर्षमेषि ।
विवेकपङ्केरुहकाननस्य तमेव नीहारमुदाहरन्ति ॥ २५ ॥

अस्या हरिणेक्षणाया हरिणस्य ईक्षणमिवेक्षणं यस्यास्तस्याः य हारं वीक्ष्य त्व हृदि हृदये हर्ष प्रमोदं एषि प्राप्नोषि । कथंभूतं हारम् । नीव्याप्तं नीवीं वसनग्रन्थिं आप्त प्राप्त नीव्याप्तम् । नीवीपर्यन्त लम्बायमानमित्यर्थः । बुधाः त हारमेव विवेकपङ्केरुहकाननस्य विवेक एव पङ्केरुह कमल तस्य काननं वन तस्य नीहारं हिमं उदाहरन्ति कथयन्ति । नीहारो यथा कमलकाननस्य दाहकस्तथायं हारः । हृदि हारवर्णनं विवेकनाशकमित्यर्थः । हार कथं नीहारमिति प्रश्ने तत्रोच्यते—कथभूत हारम् । नीव्याप्त नीशब्देन व्याप्त नीव्याप्त एतादृश हार नीहारं स्यात् ॥

विलोक्य किं सुन्दरमङ्गनोदरं करोषि मोहं मदनज्वरातुर ।
नो ईक्षसे दुर्गतिपातसंभवं भवान्तरे भाविनमङ्ग नो दरम् ॥ २६ ॥

हे मदनज्वरातुर, मदनः कामः स एव ज्वरस्तेन आतुरस्तस्य संबोधनम् । सुन्दर दर्शनार्ह अङ्गनोदरं अङ्गनाया उदर विलोक्य त्वं किं मोह करोषि । अङ्गेत्यामन्त्रणे । भवान्तरे आगामि भवे भाविनं भवनशील दर भय किं नो ईक्षसे न विचारयसि । कथभूतं दरम् । दुर्गतिपातसंभव दुर्गतिर्नरकादिस्तस्यां य पातः पतन तस्मिन् संभव उत्पत्तिर्यस्य तम् । अत्र पूर्व अङ्गनोदरमिति समस्त पदम् । परत्र अङ्ग नो दरमिति पदविभागेनार्थव्युत्पादनं चित्रम् ॥

स्फूर्जन्मनोभवभुजंगमपाशनाभी
नाभी कुरङ्गकदृशां दृशि यस्य लग्ना ।
नाभीमयं जगदशेषमुदीक्षतेऽसौ[2]
यो यत्र रज्यति स तन्मयमेव पश्येत् ॥ २७ ॥

यस्य पुरुषस्य दृशि नेत्रे । कुरङ्गकदृशां मृगनेत्राणां स्त्रीणां नाभी शरीरावयवविशेषः लग्ना । कथभूता नाभी । स्फूर्जन्मनोभवभुजंगमपाशनाभी स्फूर्जन् देदीप्यमानो यो मनोभव. कामः स एव भुजगमः सर्पस्तस्य पाशार्थ नाभी । कामसर्पस्थानमित्यर्थः । असौ पुमानशेषं समस्तं जगत् नाभीमयं अभीमय निर्भय न ईक्षते । न निर्भय जगदीक्षत इत्यर्थः । यः पुरुषो यत्र स्थाने रज्यति स पुमान् तन्मयं तद्रूपमेव पश्यति । नाभी दृशि लग्ना नाभीमयं जगत्पश्यतीति न चित्रम् । नाभीनाभीनयमिति चित्रकृत् ॥

[3]जडोपयुक्तं जघनं मृगाक्ष्याः [4]समीक्ष्य किं तोषभरं तनोषि ।
अमुं विशुद्धाध्यवसायहंसप्रवासहेतुं घनमेव विद्याः ॥ २८ ॥

---

१. 'किमीक्षसे दुर्गतिपात' इति मूलपुस्तकपाठः. २. 'स' इति मूलपुस्तकपाठः. ३. 'जलोपयुक्त' इति मूलपुस्तकपाठः. ४. 'संवीक्ष्य' इति मूलपुस्तकपाठः.

मृगाक्ष्याः स्त्रिया जघन समीक्ष्य दृष्ट्वा किं तोपभर हर्षभर तनोपि विस्तारयसि । कथभूत जघनम् । जडोपयुक्त जडाना मूर्खाणां उपयुक्त योग्य अमु जघन घन मेघमेव विद्या जानीयाः । कथभूत जघनम् । विशुद्धाध्यवसायहसप्रवासहेतुम् । विशुद्धो निर्मलो यः अध्यवसायः चित्ताभिप्राय. स एव हसः तस्य यः प्रवासः तस्य हेतुः कारण तं विशुद्धाध्यवसायहसप्रवासहेतुम् । घनागमे हसा मानसे गच्छन्तीति प्रसिद्धम् । जघन घन कथ तत्राह । जडोपयुक्तं डलयोश्चैकत्वस्मरणात् जलोपयुक्तम् । जस्य जकारस्य लोपो नागस्तेन युक्त जकार विना जघन घन स्यात् ॥

नितम्बमुल्लासिततापनोदं दिदृक्षसे यत्कमलेक्षणानाम् ।
सर्वात्मनात्यन्तकटुं विदित्वा तं निम्बमेव त्यज दूरतोऽपि ॥ २९ ॥

कमलेक्षणानां कमलनयनानां य नितम्ब पृष्ठभाग दिदृक्षसे द्रष्टुमिच्छसि । कथभूत नितम्बम् । उल्लासिततापनोद उल्लासितस्तापस्य नोदः प्रेरण येन स तम् । त नितम्ब निम्बमेव रिष्ट विदित्वा दूरतोऽपि त्यज । कथंभूत निम्बम् । सर्वात्मना पत्रफलपुष्पसमूहेन । अत्यन्तकटु अतिकटुकम् । नितम्ब कथं निम्बमिति प्रश्ने तत्रोच्यते—कथभूत निम्बम् । उल्लासिततापनोदम् उल्लासितस्तस्य तकाराक्षरस्य अपनोदो नाशो यस्मिन् स तम् । तकारनाशे नितम्बो निम्बः स्यादेवेत्यर्थः ॥

नूनं नूपुरमेतदायतदृशो रागादिविद्वेषिणां
क्रीडार्थं पुरमित्यवेत्य न दृशाप्यालोकनीयं क्वचित् ।
येनास्मिन्मुखमात्रचाङ्गिमगुणैराकृष्य तैरुल्बणै-
र्बद्धस्य प्रसभं चिरादपि सखे मुक्तिर्भवित्री न ते ॥ ३० ॥

नून निश्चित आयतदृशः आयते विस्तीर्णे दृशौ यस्यास्तस्या विशालनयनायाः एतन्नूपुर चरणभूषणं रागादिविद्वेषिणां रागादिशत्रूणां क्रीडार्थ विनोदार्थं पुर नगरमिति अवेत्य ज्ञात्वा त्वया क्वचित्कदापि दृशा नेत्रेण नालोकनीय न द्रष्टव्यम् । शत्रुपुर श्रेयोऽर्थिना पुरुषेण न विलोकनीयमित्यर्थः । हे सखे, येन नूपुरेण अस्मिन्पुरे तैः प्रसिद्धै. मुखमात्रचङ्गिमगुणैः मुखमात्रे ये चङ्गिमाः श्रेष्ठाः गुणास्तैरुल्बणैरुदारैराकृष्य प्रसभ बलात्कारेण बद्धस्य ते तव चिरादपि चिरकालेनापि मुक्तिर्मोचन न भवित्री । नूपुर पुर कथमिति प्रश्ने । तत्र कथंभूत नूपुरम् । नूनम् । नूशब्देन ऊन नून नूशब्दरहित नूपुर पुरं भवतीति ॥

या स्त्रीति नाम्ना बिभृते शमादौ शस्त्री प्रबुद्धैरवबुध्यतां सा ।
एनां पुरस्कृत्य जगत्यनङ्गभटो यतः पुण्यभटं भिनत्ति ॥ ३१ ॥

या स्त्रीति नाम्ना स्त्रीत्यभिधानेन बिभृते धारयति सा स्त्री प्रबुद्धैर्ज्ञानिभि शमादावुप-

---

१. 'किं कमले–' इति मूलपुस्तकपाठः.

शमादिकर्मणि शस्त्री अमुक्तायुधम्। अमुक्त शस्त्रीप्रमुखमिति। 'क्षुरी शस्त्री कृपाणिका' इति नामकोषः। अवबुध्यतां ज्ञायताम्। यतो यस्मात् अनङ्गभटः कामसुभटः जगति ससारे एनां स्त्रीरूपां शस्त्रीं पुरस्कृत्य अग्रे कृत्वा पुण्यभटं धर्मसुभटं भिनत्ति भेदनं करोति। सुभटेन प्रतिसुभट शस्त्र्या भेदन विधीयत एव। स्त्रीति शस्त्री कथं तत्रोच्यते। शमादौ या स्त्री शशकारमादौ बिभृते तदा स्त्री शस्त्री स्यादेवेत्यर्थः॥

येयं[1] वधूरवसिता हृदये[2] प्रमोद-
संपादनव्यतिकरैकनिबन्धनं ते।
सा दुर्गदुर्गतिपथेन जगन्निनीषो-
र्धूरेव मन्मथरथस्य विभावनीया॥ ३२॥

या इय वधूः ते तव हृदये प्रमोदसंपादनव्यतिकरैकनिबन्धनम्। हृदये यः प्रमोदस्तस्य सपादनमुत्पादनं तस्य यो व्यतिकरः समूहः तस्य निबन्धन कारण अवसिता प्राप्ता हृदयहर्षोत्पादनकारण वधूरिति त्वया मन्यत इत्यर्थः। सा वधूः मन्मथरथस्य धूरेव युगमेव विभावनीया ज्ञातव्या। कथंभूतस्य मन्मथरथस्य। जगत्कर्मतापन्न दुर्गदुर्गतिपथेन दुर्गतेर्नरकादिगतेः पन्थाः दुर्गतिपथ। 'ऋक्पूरब्धूःपथामानक्षे' इति अप्रत्ययः। दुर्गो यो दुर्गतिपथस्तेन। निनीषोर्नेतुमिच्छोः दुर्गतिमार्गेण संसारे नेतुमिच्छतः कामरथस्य धूरस्ति न वधूरित्यर्थः। वधूः धूः कथ तत्रोच्यते—वेन वकारेण सिता बद्धा वसिता। न वसिता अवसिता वकाररहिता वधूर्धूरेव स्यादित्यर्थः॥

प्रीतिं तन्वन्त्यनलसदृशो यास्तरुण्यस्तवैता
देहद्युत्या कनकनिभया द्योतिताशा विवेकिन्।
सत्यं तासामनलसदृशां संयमारामराज्यां
मा भूः पार्श्वेऽप्यसि यदि शिवावाप्तये बद्धबुद्धिः॥ ३३॥

हे विवेकिन्, या एतास्तरुण्यो नार्यः तव प्रीतिं हर्षं तन्वन्ति विस्तारयन्ति। कथभूतास्तरुण्यः। अनलसदृशः न अलसा अनलसाः आलस्यरहिता दृशो यासां ताः अनलसदृशः। उन्निद्रनेत्रा इत्यर्थः। पुनः किंविशिष्टास्तरुण्यः। कनकनिभया स्वर्णतुल्यया देहद्युत्या शरीरकान्त्या द्योतिताः प्रकाशिताः आशा दिशो याभिस्ता द्योतिताशाः। सयमारामराज्यां संयमश्चारित्रं स एव आरामस्तस्य राजी परम्परा तस्यां विषये तासां स्त्रीणां अनलसदृशां अग्नितुल्यानाम्। सत्य स्त्रीसंपर्काच्चारित्रवनदाहो भवत्येवेत्यर्थः। यदि त्व शिवावाप्तये मोक्षप्राप्त्यै बद्धबुद्धिः बद्धा बुद्धिर्येन स तादृशोऽसि तदा तासां पार्श्वेऽपि समीपेऽपि मा भूः। अत्र पद्ये अनलसदृशत्वम् एकत्र वर्णत्वेन अपरत्र दाहकशक्तित्वेनोपादान चित्रकृत्॥

---

१. 'येपा' इति मूलपुस्तकपाठः. २. 'हृदयप्रमोद' इति मूलपुस्तकपाठः.

क इह विषयभोगं पुण्यकर्मायशून्यं
स्पृहयति विषभोगं भावयेस्तत्त्वतस्त्वम्[1]।
स्मरति[2] न करणीयं मूर्छितो येन जन्तुः
पतति कुगतिगर्ते नेक्षते मोक्षमार्गम् ॥ ३४ ॥

इहास्मिन् ससारे क पुरुषो विषयभोग पञ्चेन्द्रियसुख स्पृहयति वाञ्छति । कथभूत विषयभोगम्। पुण्यकर्मायशून्यम्। पुण्यकर्मण. आयो लाभस्तेन शून्यम्। तत्त्वतस्त्व विषभोग भावये: जानीहि । विषयभोग विषभक्षणतुल्य जानीहीत्यर्थ.। तदेव स्पष्टयति—येन विषयभोगेन मूर्छितो मोह प्राप्तो जन्तु. प्राणी करणीय करणार्ह न स्मरति । पुन: मोक्षमार्ग न ईक्षते। कुगतिगर्ते पतति। विषभक्षणस्य स्मरणादिभ्रशकत्व प्रकटमेव । विषयभोगो विषभोगो भवतीत्यर्थः ॥

सखे सुखं वैषयिकं यदेतदाभासते तेन्नर[3] कान्तमन्तः ।
सत्यं तदुत्सर्पदघप्रबन्धनिबन्धनत्वान्नरकान्तमेव ॥ ३५ ॥

हे सखे हे नर, एतत् वैषयिक विषयेभ्यो भव वैषयिक सुखं ते तव अन्त चेतसि कान्तं मनोज्ञ यत् आभासते तत्सत्यम् । मिथ्या नेत्यर्थः । उत्सर्पदघप्रबन्धनिबन्धनत्वात्। उत्सर्पन्प्रसर्पन् यः अघस्य पापस्य प्रबन्ध परम्परा तस्य निबन्धन कारण तस्य भावस्तत्त्वं तस्मात्। नरकान्तमेव नरक एव अन्तो यस्य तत् नरकान्तम् । नरकप्रापकमित्यर्थं । अत्र पद्ये पूर्वत्र नर कान्तमिति भिन्न पदम्, परत्र नरकान्तमिति समस्त पदमिति चित्रकृत् ॥

स्मरक्रीडावाप्यां वदनकमले पक्ष्मलदृशां
दृढासक्तिर्येषामधरमधुपानं विदधताम् ।
अदूरस्था[4] बन्धव्यसनघटना क्लेशमहती
विमुग्धानां तेषामिह मधुकराणामिव नृणाम् ॥ ३६ ॥

स्मरक्रीडावाप्या स्मरक्रीडार्थं वापी तस्या येषां मनुष्याणा पक्ष्मलदृशा स्त्रीणा वदनकमले वदनमेव कमल तत्र दृढासक्ति दृढा आसक्ति. तन्मयता वर्तते इति शेष । किं कुर्वता येषाम् । अधरमधुपानं विदधताम्। अधरमेव मधु पुष्परस तस्य पान तत् कुर्वताम् । तेषा नृणा इह वदनकमले मधुकराणां भ्रमराणामिव बन्धव्यसनघटना बन्धेन बन्धनेन यद्व्यसन कष्ट तस्य घटना रचना अदूरस्था समीपवर्तिनी भवति । कथभूताना

---

१. 'भावयस्तात्त्वतस्तम्' इति मूलपुस्तकपाठ. २ 'स्मरति न करणीय नेक्षते मोक्षमार्ग पतति कुगतिगर्ते मूर्च्छितो येन जन्तुः' इति मूलपुस्तकपाठः. ३. 'यन्नर कान्तमेव' इति मूलपुस्तकपाठः. ४. मूलपुस्तके तृतीयतुरीयचरणयोर्व्यत्ययोऽस्ति.

मधुकराणाम्। नृणां च विमुग्धानां मोहदशां प्राप्तानाम्। कथभूता बन्धव्यसनघटना। क्लेशमहती क्लेशेन महती दुःसहा। यथा भ्रमराणां कमले मधुपानं कुर्वतां दृढास-क्तिर्बन्धनकष्टदायिनी, तथा नृणां स्त्रीमुखकमले अधररसपान कुर्वतां वधबन्धनादि कष्ट भवतीत्यर्थः॥

सखे संतोषाम्भः पिव चपलतामुत्सृज निजां
शमारामे कामं विरचय रुचिं चित्तहरिण।
हरन्त्येतास्तृष्णां न युवतिनितम्बस्थलभुवो
विमुक्ता नीरागैर्विषमशरसंपातविषमाः॥ ३७॥

हे सखे हे चित्तहरिण, चित्तमेव हरिणो मृगस्तस्य संबोधनम्। चित्तस्य चाञ्चल्या-न्मृगसादृश्यम्। त्वं संतोषाम्भः पिव संतोष एव अम्भो जलं त्व पिव। निजां स्वकीयां चपलतां चापलमुत्सृज त्यज। काममत्यर्थं शमारामे शम एव आरामस्तस्मिन् उपशम-वने रुचिं तुष्टिं विरचय कुरु। मृगस्य वनेऽधिकरुचित्वात् इष्टोपदेशः। एता युव-तिनितम्बस्थलभुवः। युवतीनां नितम्बाः पृष्ठभागाः त एव स्थलभूमयः तव तृष्णां तृषां न हरन्ति न दूरीकुर्वन्ति। स्थलभुवं दृष्ट्वा तृष्णापहारो न भवतीत्यर्थः। कथंभूता युवति-नितम्बस्थलभुवः। नीरागैर्विमुक्ताः। नीराणि च अगाश्च नीरागास्तैः जलवृक्षैर्विमुक्ताः। जलेन वृक्षच्छायया च तृषाहानिर्भवति। पुनः कथभूता युवतिनितम्बस्थलभुवः। वि-षमशरसपातविषमाः। विषमा असह्या ये शरसपाता बाणपातास्तैर्विषमा दुष्टाः। अस्यां भुवि व्याधादिभिर्बाणपातो विधीयते, तेन तव मरण भविष्यति, न तु तृष्णाहानिरित्यर्थः। पक्षे कथंभूता युवतिनितम्बस्थलभुवः। नीरागैः रागरहितैर्विमुक्तास्त्यक्ताः। विषमशरः कामस्तस्य सपातेन विषमा अमनोज्ञाः। एतेन युवतिनितम्बवाञ्छां मा कुरु इति चित्त प्रत्युपदेशः।

चेतश्चापलमाकलय्य कुटिलाकारां कुरङ्गीदृशो
दृष्ट्वा कुन्तलराजिमञ्जनघनश्यामां किमुत्ताम्यसि।
धर्मध्यानमहानिधानमधुना स्वीकर्तुकामस्य मे[2]
प्रत्यूहार्थमुपस्थितेयमुरगश्रेणीति संचिन्तयेः॥ ३८॥

हे चेतः, त्वं कुरङ्गीदृशो मृगाक्ष्याः कुन्तलराजिं शिरोरुहश्रेणिं दृष्ट्वा चापलमाकलय्य चाञ्चल्य गृहीत्वा किमुत्ताम्यसि किं आकुलतां करोपि। कथंभूता कुन्तलराजिम्। कुटिलाकाराम्। कुटिलो वक्र आकारो यस्यास्ताम्। पुनः कथभूता कुन्तलराजिम्। अञ्जनघनश्यामाम्। अञ्जनं कज्जल घनो मेघस्तद्वत् श्यामां कृष्णाम्। केशानां कृष्णत्वं

---

१. 'प्राणान्न' इति मूलपुस्तकपाठः, तृतीयचतुर्थचरणव्यत्ययश्च. २. 'ते' इति मूल-पुस्तकपाठः.

यौवने । तद्युक्तां स्त्रियं दृष्ट्वा चित्तचलनं न्याय्यम् । उक्तं च—'पुष्पं दृष्ट्वा फलं दृष्ट्वा दृष्ट्वा च नवयौवनाम् । द्रविणं पतितं दृष्ट्वा कस्य नो चलते मनः ॥' इति । मे मम प्रत्यूहार्थं विघ्नार्थं अधुना इदानीं उपस्थिता प्राप्ता इयं उरगश्रेणी सर्पपरम्परा इति त्वं सचिन्तयेः जानीयाः । कथंभूतस्य मे । धर्मध्यानमहानिधानं स्वीकर्तुकामस्य अङ्गीकुर्वतः धर्मध्यानं धर्मचिन्तनं तदेव महानिधानम् । यत्किंचित्कार्यकरणोद्यतस्य सर्पदर्शनं निषिद्धम् । निधानस्वीकारे तु सर्पदर्शनमतीव नेष्टमित्यर्थः । कुन्तलस्य सर्पोपमानत्वं कविसंमतमेव ॥

यातुं यद्यनुरुच्यते शिवपुरीं रामानितम्बस्थलीं
मुञ्चेर्दूरमिमामनङ्गकलभक्रीडाविहारोचिताम् ।
नो चेद्यौवनचण्डवातविततव्यामोहधूलीकण-
क्लाम्यद्दृष्टिरदृष्टशाश्वतपथः प्राप्नोषि जन्माटवीम् ॥ ३९ ॥

हे पुमन्, यदि तुभ्यं शिवपुरीं मुक्तिनगरीं यातुं गन्तुं अनुरुच्यते तदा त्वं इमां रामानितम्बस्थलीं स्त्रीनितम्बभूमिं दूरं दूरतो मुञ्चेः । कथंभूतां रामानितम्बस्थलीम् । अनङ्गकलभक्रीडाविहारोचिताम् । अनङ्गः कामः स एव कलभः गजशिशुः तस्य क्रीडार्थं विहारो विहरणं तत्रोचितां योग्याम् । चेदिमां दूरं न मुञ्चसि तदा किं भविष्यति तदाह—नो चेदिति । त्वं जन्माटवीं संसाराटवीं प्राप्नोषि । कथंभूतस्त्वम् । यौवनचण्डवातविततव्यामोहधूलीकणक्लाम्यद्दृष्टिः । यौवनमेव चण्डवातस्तेन विततः विस्तारितः व्यामोहो वैचित्यं स एव धूलीकणस्तेन क्लाम्यन्ती व्याकुला दृष्टिर्यस्य तथाविधः । अत एव अदृष्टशाश्वतपथः । न दृष्टः शाश्वतस्य शिवस्य पन्था मार्गो येन सः । रजःकणपतनं दृष्ट्वा मार्गावलोकनं न भवत्येवेत्यर्थः ॥

शमधनमपहर्तुं कामचौरप्रचारं
विरचयति निकामं कामिनीयामिनीयम् ।
सपदि विदधती या मोहनिद्रासमुद्रां
जनयति जनमन्तःसर्वचैतन्यशून्यम् ॥ ४० ॥

इयं कामिनीरूपा यामिनी रात्रिः निकाममत्यन्तं कामचौरप्रचारं काम एव चौरस्तस्य प्रचारं विहरणशीलत्वं विरचयति प्रकटीकुरुते । किं कर्तुम् । शमधनमपहर्तुं शम उपशम एव धनं तद्ग्रहीतुम् । यामिन्यां धनाहरणार्थं चौरप्रचारो भवति । या यामिनी जनं मनुष्यं अन्तःसर्वचैतन्यशून्यं अन्तरिति अन्तःकरणे सर्वं च तत् चैतन्यं च तेन शून्यं रहितं

---

१. 'अनुरज्यसे' इति मूलपुस्तकपाठः. २. 'हरिणक्रीडा—' इति मूलपुस्तकपाठः. ३. 'प्राप्तासि' इति मूलपुस्तकपाठः. ४ 'निद्राममुद्रां' इति मूलपुस्तकपाठ..

जनयति करोति। यामिनी किं कुर्वती। सपदि तत्काल मोहनिद्रासमुद्रां मोहो मूर्छा एव निद्रा तस्या. समुद्रां समृद्धिं विदधती॥

मृगेक्षणा नूनमसावसीमा भीमाटवी बुद्धिमतामतीत्या।
यद्बाहुवल्लीभिरनङ्गभिल्लो बद्ध्वा नरांल्लम्भयते न मुक्तिम्॥ ४१॥

नून निश्चितं असौ मृगस्य अक्षिणीवाक्षिणी यस्या' सा मृगेक्षणा स्त्री। भीमाटवी भयानकारण्यम्। वर्तते इति शेषः। कथभूता भीमाटवी। असीमा। न विद्यते सीमा मर्यादा यस्याः। पुनः कथभूता। बुद्धिमतां विदुषा अतीत्यातिक्रमणीया यद्बाहुवल्लीभिः यस्या मृगेक्षणाया बाहू एव वल्लयो लतास्ताभि. अनङ्ग एव भिल्लस्तस्कर. नरान् मनुष्यान् बद्ध्वा मुक्ति न लम्भयते न कारयति। यथा अटव्यां तस्करः पथिकान् लताभिर्बद्ध्वा सर्वस्व गृह्णाति, तथा मृगेक्षणापि कण्ठग्रहण कृत्वा नरान्मुक्तिप्राप्तिं न कारयतीति भावार्थः॥

इयं वारंवारं द्युतितुलितरोलम्बवलयं
न वक्रं भ्रूचक्रं चलयति मृगाक्षी मम पुरः।
कुधीकारागारापसरणमतिं मां स्खलयितुं
प्रपञ्चत्पञ्चेषोर्वहति निविडं लोहनिगडम्॥ ४२॥

इयं मृगाक्षी मृगलोचना स्त्री मम पुर पुरस्तात् वक्र भ्रूचक्र वारवारं अनुवेल न चलयति। कथभूत भ्रूचक्रम्। द्युतितुलितरोलम्बवलयम्। द्युत्या कान्त्या तुलितः समानीकृतो रोलम्बाना भ्रमराणां वलयो वृत्तता येन। किमेतत्तदाह—मा स्खलयितुं गमनाभाव कर्तुं पञ्चेषोः पञ्च इषवो बाणा यस्य तादृशस्य कामस्य निबिड दुःसहं लोहनिगड वहति धारयति। किंभूत लोहनिगडम्। प्रपञ्चत् प्रपञ्चयुक्तम्। कथभूतं माम्। कुधीकारागारापसरणमतिम्। कुत्सिता धी. कुधी' सैव कारागारो वन्दिस्थान तस्मादपसरणे दूरगमने मतिर्यस्य तम्। यथा चौरस्य लोहनिगडं क्षिप्त्वा कारागारे क्षिप्यते, तथा मामपि वशीकर्तुं भ्रूचक्र कामस्य निगडं धत्ते इत्यर्थ.॥

यामोऽन्यत्र द्रुततरमितो मित्र यत्कण्ठपीठे
नायं हारश्चकितहरिणीलोचनायाश्चकास्ति।
नाभीरन्ध्रे विहितवसतिर्योऽस्ति कंदर्पसर्प-
स्तन्मुक्तोऽयं स्फुरति रुचिरः किं तु निर्मोकपट्टः॥ ४३॥

---

१. 'अतीव' इति मूलपुस्तकपाठ. २. 'बद्धान्' इति मूलपुस्तकपाठ. ३. 'चलाक्षी' इति मूलपुस्तकपाठ.. ४ 'क्रुधा' इति मूलपुस्तकपाठ'. ५. 'छलयितुं प्रपञ्चात्' इति मूलपुस्तकपाठः.

हे मित्र, वयं इतोऽस्मात् । अन्यत्र द्रुततरं अतिशीघ्रं यामो गच्छामः । चकितहरिणीलोचनायाः । चकिता हरिणी तस्या लोचने इव लोचने यस्यास्तस्याः । कण्ठपीठे यत् चकास्ति शोभते अयं हारो नास्ति किंतु यः कदर्पसर्प. कदर्प' कामः स एव सर्पस्तन्मुक्तस्तेन सर्पेण मुक्तस्तन्मुक्त. । अय रुचिरो मनोज्ञः निर्मोकपट्ट कञ्चुकः स्फुरति चकास्ति । कथंभूतः कदर्पसर्प' । नाभीरन्ध्रे विहितवसति. । नाभीरन्ध्रे नाभीकुहरे विहिता कृता वसतिर्वासो येन स नाभीरन्ध्रे विहितवसति. । अयमेवान्यत्र गमने हेतु' । सर्पकञ्चुकदर्शनमपि भयावहम् । नाभी सर्पविल हारं सर्पकञ्चुक तद्बुद्ध्या पलायन युक्तमेवेत्यर्थः ॥

> यः कामकामलविलुप्तविवेकचक्षुः
> स्वर्गापवर्गपुरमार्गमवीक्षमाणः ।
> ज्ञानाञ्जनं प्रति निरादरतामुपैति
> भ्रातः पतिष्यति स भीमभवान्धकूपे ॥ ४८ ॥

यः पुरुषः ज्ञानाञ्जनं ज्ञानमेवाञ्जनं प्रति निरादरतामुपैति निरादर करोति । कथंभूतो यः । कामकामलविलुप्तविवेकचक्षुः । कामः स्मरः स एव कामलो नेत्ररोगस्तेन विलुप्त विवेक एव चक्षुर्यस्य स कामकामलविलुप्तविवेकचक्षु' । अत एव स्वर्गापवर्गपुरमार्गमवीक्षमाण[1] । स्वर्गो देवलोकोऽपवर्गो मोक्ष , तावेव पुरे नगरे तयोर्मार्गस्तमवीक्षमाण. अदर्शक. एवंविधः स पुरुषः हे भ्रात , भीमभवान्धकूपे । भीमो भयानक' भव. संसार' स एव अन्धकूपः तस्मिन् पतिष्यति यः कामलारोगग्रस्तचक्षुरञ्जन प्रत्यादर न करोति सोऽन्धकूपे पतत्येवेति ॥

> भवारण्यं मुक्त्वा यदि जिगमिषुर्मुक्तिनगरीं
> तदानीं मा कार्षीर्विषयविषवृक्षेषु वसतिम् ।
> यतश्छायाप्येषां प्रथयति महामोहमचिरा-
> दयं जन्तुर्यस्मात्पदमपि न गन्तुं प्रभवति ॥ ४९ ॥

हे पुमन्, भवारण्यं ससाराटवीं मुक्त्वा यदि मुक्तिनगरीं शिवपुरीं जिगमिषु' गन्तुमिच्छुरसि तदानीं विषयविषवृक्षेषु विषया एव विषवृक्षास्तेषु वसतिं रातिं त्वं मा कार्षीः मा कुर्याः । यतो यस्मात् कारणात् एषां वृक्षाणा छायापि महामोह अचिरात् शीघ्र प्रथयति विस्तारयति । विषयविषच्छायास्पर्शोऽपि वैचित्यकारको भवतीत्यर्थः । अतः कारणात् अय जन्तु' प्राणी पदमपि पादमात्रमपि गन्तु गमनाय न प्रभवति न समर्थ भवति । यथारण्य मुक्त्वा नगरीं गन्तुकामो नरो विषवृक्षाधो वमन् मत्तो भवति तदा

---

१. 'अवेक्ष्यमाण' इति मूलपुस्तकपाठ..

पदमात्रमपि न गन्तुं शक्नोति। तद्वत् ससारं मुक्त्वा मुक्तिमभिलषता पुंसा विषयसेवाया मतिर्न कार्येति तात्पर्यम् ॥

सोमप्रभा चार्यमभा च यन्न पुंसां तमःपङ्कमपाकरोति।
तदप्यमुष्मिन्नुपदेशलेशे निशम्यमानेऽनिशमेति नाशम् ॥ ४६ ॥

सोमप्रभा चन्द्रकान्तिः च पुन. अर्यमभा अर्यम्णः सूर्यस्य कान्तिः यत्पुंसां मनुष्याणां तम.पङ्कमज्ञानान्धकारसमूह न अपाकरोति न दूरीकरोति तदपि अन्तर्गतान्धकारमपि अमुष्मिन्नुपदेशलेशेऽल्पोपदेशे निशम्यमाने श्रूयमाणे सति अनिशं निरन्तरं नाशमेति नाश प्राप्नोति। चन्द्रसूर्यप्रभयाज्ञानान्धकार दूरीकर्तु न शक्यते। अनेनोपदेशेन अन्तर्गतान्धकारमपि दूरीकर्तु शक्यत इति। अतोऽस्योत्कृष्टत्वम्। अत्र पद्ये ग्रन्थकर्त्रा सोमप्रभाचार्य इति स्वनाम गोपित चातुर्येणेति बोध्यम् ॥

संवत्स(च्छ)रद्विपमुनीन्दु(१७७५)मितस्य मासे मार्गे त्रयोदशमिते दिवसे भृगौ च।
स्वल्पा तरी विरचिता सुखबोधिकाख्या श्लेषौघदुस्तरतरङ्गिणिकासुशास्त्रे ॥

आगरानाम्नि नगरे नन्दलालेन धीमता।
दानविशालशिष्यानुरोधेन कृपया गुरो. ॥ (युग्मम्)

सोमप्रभाचार्यकृतिं सुदुर्गमा विवृण्वता स्वल्पधिया मयात्र यत्।
न्यूनाधिकोट्टङ्कनमल्पबुद्धित कृत विशोध्य कृतिभिः कृपालुभिः ॥

श्रीजिनभक्तिसूरीन्द्रे गच्छसाम्राज्यं बिभ्रति।
अशेषमनुजवृन्दनतपादाम्बुजद्वये ॥

इति सुखबोधिकानाम्न्या वृत्त्या समेता श्रीशतार्थवृत्तिकारश्रीसोमप्रभाचार्यविरचिता शृङ्गारवैराग्यतरङ्गिणी समाप्ता।

---

## महाकविश्रीनारायणभट्टपादविरचितं[3]

# कोटिविरहम्[4]।

भङ्ग्या निजाङ्गकानामङ्गजमपि मानहीनमाकलयन्।
संगीतकेतुनामा धीमानासीद्द्विजोत्तमः श्रीमान् ॥ १ ॥

---

१. 'समुपैति' इति मूलपुस्तकपाठः. २. 'शतार्थिसोमप्रभाचार्यकृता' इति मूलपुस्तकपाठः. ३. कवेर्देशकालौ काव्यमालाया एकविंशेऽङ्के 'स्वाहासुधाकर'प्रारम्भटिप्पणे द्रष्टव्यौ. कोटिविरहाख्योऽय ग्रन्थ उत्तरमलवार(केरल)देशान्तवर्ति'कटथनद'राजेन श्रीमुदुदयवर्मणा केरलीयलिपितो देवनागराक्षरैर्विलिख्यास्मभ्यं प्रेषित इति महदुपकृतं भूभृता. ४. केरलीयाः सदाशिवशास्त्रिणस्तु 'कोडिअविरहम्' इति ग्रन्थनाम वदन्ति, 'कोडिअ'शब्दः केरलभाषाया नूतनवाचक इति तदर्थे च.

कलाभिरपि पूर्णात्मा कुमुदामोदमावहन् ।
सतां प्रीतिकरः सोऽयं द्विजेन्द्रः शुशुभेतराम् ॥ २ ॥

तस्मिन्नेव समये

संकेतभूमिः सुकुमारतायाः संगीतसाहित्यसरोमराली[1] ।
शृङ्गारलक्ष्मीरिव संभृताङ्गी शृङ्गारलीलेति बभूव बाला ॥ ३ ॥

अधिककुतुकदात्री पश्यतां सा समेपा-
ममृतकिरणलेखेवान्वहं वर्धमाना ।
अभजत वयसस्तामत्युदारामवस्था-
मतुलितमपदानं तन्वतीमङ्गयोनेः ॥ ४ ॥

यथा यथा वक्षसि पक्ष्मलाक्ष्याः कुचद्वयी वृद्धिमवाप तस्याः ।
तथा तथावर्धत कामुकानां विलोकने कापि कुतूहलश्रीः ॥ ५ ॥

आकर्णयन्तावनघान्गुणौघानाम्रेड्यमानाननिशं जनौघैः ।
आकाङ्क्षितान्योन्यविलोकनौ तावास्तामभन्दप्रणयौ युवानौ ॥ ६ ॥

हृदयगूढनिरूढमनोजयोरिति तयोर्वसतोः कुतुकार्द्रयोः ।
अभवदभ्युदयाय महो महाननतिदूरगते गिरिजालये ॥ ७ ॥

आकल्पजालसविशेषमनोहरश्रीः
साकं वयस्यनिवहैश्च समानवेपैः ।
सोऽयं विवेश गिरिजाभवनं विलासी
तामुत्सवश्रियमुदीक्षितुमुत्सुकात्मा ॥ ८ ॥

आकाङ्क्षितार्थजननीमभिवन्द्य गौरी-
मालोकयन्नभिनवानयमत्मुनौ(मुत्सवौ)घान् ।
अन्यूनकौतुकभरैः सहितो वयस्यै-
रध्यारुरोह ललितामथ रत्नवेदीम् ॥ ९ ॥

आलीवृन्दैरधिकनिपुणैरात्मना निर्विशेषैः
केलीशीलैः सततवशगैरावृता च स्वकान्तैः[2] ।

---

१. हंसी. २. 'साखिलानां' इत्यपि पाठ..

नानाभूषामणिगणरुचा भासयन्ती दिगन्तं
सा च प्रागादुदितकुतुका द्रष्टुमेवोत्सवं तम् ॥ १० ॥
नत्वा देवीमभिमतफलप्राप्तिहेतुं भवानीं
मुग्धाक्षी सा सह सहचरैः संचरन्ती सहेलम् ।
प्राप्ता दैवात्सपदि पुरतस्तस्य संगीतकेतो-
रत्रानन्दप्रसरमपरां(?) वेदिकामारुरोह ॥ ११ ॥

विलोकयन्ती तमतीव कान्तं विलोचनासेचनकं युवानम् ।
सा कोऽयमित्यन्तरुदीतचिन्ता बाला क्षणं व्याकुलतामवाप ॥ १२ ॥
स च तामवलोकयन्नुपेतामतिमात्रायतलोचनामदूरे ।
हृदि केयमिति प्ररूढचिन्तः क्षणमासीत्प्रतिपत्तिमूढचेताः ॥ १३ ॥
स इति सेति च तौ परिवोधितौ सवयसा शनकैः श्रवणान्तिके ।
अतनुतां परिरम्भणमञ्चलैर्नयनयोर्नवविभ्रमचञ्चलैः ॥ १४ ॥

उद्भिद्यमानपुलकौ निटिलप्ररोह-
दाकम्रघर्मकणसुन्दरवक्त्रबिम्बौ ।
धन्याविमौ विगलितान्यसखौ युवाना-
वन्योन्यदर्शनमहोत्सवमन्वभूताम् ॥ १५ ॥
अत्यायतैर्गुणगणैर्निविडं निबद्धा-
वाकृष्यतामभिमुखौ तरसा विधाय ।
अव्याजवक्रमधनो विललास संध्ये(?)
सव्यापसव्यमिषुभिर्विकिरन्मनोभूः ॥ १६ ॥

तदनु कतिपयानां नाडिकानां विरामे
विरतिमुपगतोऽभूदुत्सवश्चण्डिकायाः ।
विततकुतुकभाजोरेतयोर्नेत्रकोण-
व्यतिकररसजन्मा तूत्सवो न व्यरंसीत् ॥ १७ ॥

अपयत्सु जनेषु तावत्ताववरूढौ गमनाय वेदिकायाः ।
मृदुहाससुधानुलिप्तवक्त्रौ मितमापृच्छ्य यथागतं प्रयातौ ॥ १८ ॥

किमपि किमपि सख्याः श्रोत्रमूले वदन्ती
वलितवदनमेनं वीक्षमाणा युवानम् ।
कपटकृतविलम्बा कामिनी सा कथंचि-
न्निजनिलयमयासीन्निह्नुतानङ्गपीडा ॥ १९ ॥

सेयं सायं प्राप्य गेहं नताङ्गी भेजे तल्पं कल्पितं तत्सखीभिः ।
अत्यारूढां चित्तजन्मव्यथां तामध्वश्रान्तिव्याजतो गूहमाना ॥२०॥

पश्यन्ती तं हृदि सुकृतिनं निःश्वसन्ती सुदीर्घं
नश्यद्धैर्या नयनकमलादश्रुधारां किरन्ती ।
विस्रस्ताङ्गी विदलितमनाः सायकैर्मीनकेतो-
रस्वस्था सा समजनि मनोमोहना मुग्धगात्री ॥ २१ ॥

विदितविगतिमूलैः सा सखीनां निकायैः
सततमथ वचोभिः सम्यगाश्वास्यमाना ।
कथमपि धृतशोका वासरान्वत्सराभा-
न्परिचितधृति निन्ये पञ्चपानञ्चिताङ्गी ॥ २२ ॥

स्फुटमिव कथयन्तीमन्तरुज्जृम्भमाणां
कुसुमविशिखपीडां मुग्धपातैः कटाक्षैः ।
स च मधुरमुखीं तां वीक्षमाणः प्रयान्तीं
युगपदभिहतोऽभूदायुधैरङ्गयोनेः ॥ २३ ॥

चतुरवचनभेदव्यञ्जितातीतवृत्तै-
स्तदनु सह वयस्यैरेष मन्दं जगाम ।
गलदतिगुरुकैश्यं गन्धमातङ्गमन्दं
गमनमनघगात्र्याश्चिन्तयन्नन्धचेताः ॥ २४ ॥

गत्वा गेहं प्रियसहचरैः साकमारूढमूल
मारातङ्कं मनसि सततं गूहमानोऽपि धीमान् ।
तामेवान्तस्तरलनयनां कल्पयन्नल्पधैर्यं
क्षामक्षामः समजनि दिनैः पञ्चपैरेष कामी ॥ २५ ॥

---

1. कामव्यथाम्.

वक्त्रं तदुद्गतमनोहरमन्दहासं
वक्षोरुहावपि च तौ क्रमवर्धमानौ।
विस्तारितं जघनमित्यनुवेलमस्य
चित्तं क्रमेण तरुणीमयमेव जातम् ॥ २६ ॥

तस्मिन्ननुक्षणमिति प्रविजृम्भमाणे
मारामये स तु कदाचिदुदारधामा।
व्याजेन केनचिदनन्यगतिः स्वगेहा-
देकः प्रियामवलुलोकयिषुः प्रतस्थे ॥ २७ ॥

अंसे वहन्नधिककोमलमङ्गनानां
चिल्लीविलासचतुरं मधुरं शरासम्।
अध्वानमन्तिकचरं कथयन्नवक्रं
साहाय्यमस्य विदधे सहकारवाणः ॥ २८ ॥

स्फुरद्रागोन्मेषे चरमगिरिसौधाग्रवलभीं
नभोमध्यादह्वा विशति नलिनीजीवितसमे।
असावक्षीणश्रीरधिकलुलिताङ्गोऽपि शनकैः
प्रपेदे प्रेयस्याः प्रकृतिरमणीयं निलयनम् ॥ २९ ॥

तदनु मुदितचेताः प्राप्य वापीमदूरे
विमलसलिलपूरस्पर्शवीताध्वखेदः।
अधिकसुभगपातैः सेवितो वातपोतैः
सकुतुकमभिपेदे मन्दिरं सुन्दराङ्ग्याः ॥ ३० ॥

आवृण्वानामुरसिजभरोत्सेधमेकेन दोष्णा
विन्यस्यन्तीं तदितरकरे वक्त्रमापाण्डुगण्डम्।
अङ्के सख्या निहितचरणामध्वनि न्यस्तनेत्रा-
मद्राक्षीत्तां मृदुनि तलिमे मुग्धगात्रीं शयानाम् ॥ ३१ ॥

तदनु मदनपीडां मानसे देहकान्त्या
स्फुटमिव कलयन्तीं प्रेक्ष्य कान्तामदूरे।

---

१. भ्रूभङ्गमनोहरम्. २. धनुः. ३. कामः. ४. मन्दवायुभिः. ५. तल्पे.

कुतुकभरमनोजातङ्कमिश्रीकृतात्मा
द्रुतमभजत कामी वामनेत्रासकाशम् ॥ ३२ ॥

अभ्यर्थ्यमानमनिशं मनसा पुरस्ता-
दभ्यागतं समवलोक्य युवानमेनम् ।
सा स्वागतोक्तिमकरोदमृतद्रवार्द्र-
मन्दारकान्तिलहरीसुहृदा स्मितेन ॥ ३३ ॥

ततः श्रान्ते कान्ते सविधभुवि सख्या चतुरया
समानीतं नव्यं तृणकटमलंकुर्वति शनैः ।
न्यषीदत्सा चोरान्मितमधुरवाणीविलसितै-
र्हरन्ती तच्चेतो हरिणतरुणीमुग्धनयना ॥ ३४ ॥

लपन्तावन्योन्यं किमपि समुदाचारसरसं
दिशन्तौ ताम्बूलं परिमिलितकर्पूरशकलम् ।
वदन्तावाकाङ्क्षामधिकचतुरैरक्षिवलनै-
र्युवानौ तावास्तामुदयदधिकामोदसरसौ ॥ ३५ ॥

वाङ्मात्रेण प्रतिष्ठासुमप्रतिष्ठासुमात्मना ।
कामिनी कामुकं प्राह यामिनीकामुकानना ॥ ३६ ॥

यातप्रायमिदं दिनं कमलिनी दीनेयमालोक्यतां
नीरन्ध्रश्च पयोधरः स च शशी दूरेऽधुना वर्तते ।
विश्रामागारमिदं तटाकसविधे स्वायत्तमेतच्च ते
गेहं तत्क्षपय क्षपामिह महान्कार्यातिपातो न चेत् ॥ ३७ ॥

अध्वा निर्मल एव नापि सहसा संवर्धते वा तमो
विद्यन्ते च निकेतनानि सुहृदामृद्धानि मध्येपथम् ।
मुग्धापाङ्गि पयोधरः परमसौ संध्यागमे सांप्रतं
प्रस्थानोद्यममुन्नमत्परिगलद्धारो रुणद्ध्येव मे ॥ ३८ ॥

---

१. आरात्समीपे सा च न्यषीदत्. २. चन्द्रानना. ३. स्तनो मेघश्च. ४. परिगलन्-हारः; (पक्षे) परिगलत्-धारः.

वदतोरिति मुग्धहासमाध्वमिधुरं व्यञ्जितमञ्जुरागबन्धम् ।
अरुणं तरणेरवाप बिम्बं वरुणाशातरुणीवतंसभावम् ॥ ३९ ॥

अथ स विहितसंध्यावन्दनाद्यः समीपे
कथितधरणिदेवस्यालये तन्नियोगात् ।
सकुतुकरुचि भुक्त्वा स्वादुसंपन्नमन्नं
त्वरितमुपजगाम प्रेयसीवासगेहम् ॥ ४० ॥

स्नातानुलिप्ततनुरागमनं तदीयं
सा च प्रगाढकुतुका परिपालयन्ती ।
मुग्धेक्षणा निजमसेवत वासगेहं
मुद्रादरिद्रमदनद्युतिमुग्धगात्री ॥ ४१ ॥

उन्निद्रकान्तिलहरीमहनीयगात्रीं
संनाहिनीं सरसिजायुधसंप्रहारे ।
तां पश्यतः क्षितिसुरस्य समुज्जजृम्भे
पूर्वाधिका मनसि कापि कुतूहलश्रीः ॥ ४२ ॥

तल्पोपान्ते तदनु च मिथः संनिविष्टौ दिशन्तौ
कर्पूरैलामिलनसुभगां शुभ्रताम्बूलवीटीम् ।
सख्या साकं चतुरवचसा सूचितान्योन्यभावै-
र्वक्रालापैः कमपि समयं यापयांचक्रतुस्तौ ॥ ४३ ॥

पश्यन्ती पुनरनयोरिङ्गितभेदैरनङ्गपरिपीडाम् ।
नातिचिरादतिनिपुणा नाटितनिद्रागमा सखी निरगात् ॥ ४४ ॥

वहिः स्वल्पं तल्पं तदनु स तया दीपकरया
समादिष्टं भेजे मदनपरिद्रूनेन वपुषा ।
दृष्ट्वा तु प्रत्यग्रं प्रसववशरकेलीगृहगतं
तदीयप्रत्यन्तं परिहसितपर्वेन्दुसुषमम् ॥ ४५ ॥

तदनु शशिमुखी सा प्राप्य शय्यानिकेतं
निजमभजत तल्पं निर्भरानङ्गपीडा ।

१. सूर्यस्य. २. पश्चिमा दिक्. ३. मदनयुद्धे संनद्धाम्. ४. कामः.

किमपि जनितकम्पैरङ्गकैर्भृङ्गमाला-
वचन(चरण)चलितमल्लीवल्लरीतुल्यकुल्यैः ॥ ४६ ॥
मनसा सदृशानुरागभाजौ मुहुरुद्युक्तपरस्पराभिसारौ ।
अवमानभयेन जातचिन्तावबलन्तौ वपुषा च तावभूताम् ॥ ४७ ॥
तल्पादनल्परसमुच्चलितोऽथ तत्त्वा-
त्पुष्पायुधेन बलिना परिणुद्यमानः ।
सोऽयं विवेश शनकैः शफरेक्षणायाः[1]
शय्यागृहं शमितकल्पमणिप्रदीपम् ॥ ४८ ॥
बद्धोद्यमा तदभिसारविधौ विसोढुं
तत्तादृशं मदनतापमपारयन्ती ।
मुग्धा विहाय शयनं स्वयमुत्थिता च
न्यस्तं च तेन विवरे कुचयोः कराब्जम् ॥ ४९ ॥
पुलकिततनुवल्ली सा ततः प्रीतिवेगा-
न्मृदुलभुजलताभ्यां गाढमालिङ्ग्य कान्तम् ।
अधिककुतुकमारादानमर्य्यादसीयं[2]
वदनमधरबिम्बं चुम्बति स्म प्रकामम् ॥ ५० ॥
अनुदिवसमयोगे चेतसा काङ्क्षितं य-
द्यदपि मदननाम्ना [3]देशिकेनोपदिष्टम् ।
स्फुरितमभवदन्तर्यत्तदात्वे[4] च यूनोः
सुरतमननुभूतं संबभूवाभिरामम् ॥ ५१ ॥
मिथुनमिदमुदारस्वेदलेशानुविद्धं
पुलकि गलितधैर्यं पुष्यदानन्दभारम् ।
दृढमभजत जाग्रत्स्वप्नयोर्मध्यसंस्थां
मदनरससमुत्थामत्युदारामवस्थाम् ॥ ५२ ॥
अथ सुरतविरामे विस्मृतान्योन्यभेदं
कृतघनपरिरम्भं कोमलाभ्यां कराभ्याम्(भुजाभ्याम्) ।

---

१. मीनलोचनायाः. २ एतदीयम् ३. गुरुणा. ४. तस्मिन्काले.

मिलितवदनविम्बं मिश्रितोरुप्रकाण्डं
शयनमभजतां तौ श्रान्तिभाजौ युवानौ ॥ ९३ ॥
नाराचबाण(पात)परुपे चरणायुधानां
नादे ततः सरति कर्णयुगान्तरालम् ।
गाढं कुचान्तरगतं परिरभ्य कान्तं
वान्ताशुबिन्दु कमनी[1] वचनं बभाषे ॥ ९४ ॥
आबाल्यादपि कान्त कर्णविवरं प्राप्तैस्त्वदीयैर्गुणै-
रासक्तं त्वयि मानसं द्विगुणितं जातं त्वदालोकनात् ।
प्राप्तोऽस्यद्य पुनर्मदीयसुकृतैस्तन्मामनन्याश्रयां
त्यक्त्वाद्यैव न याहि पाहि मदनातङ्केन दूनामिमाम् ॥ ९५ ॥
तन्व्या तया निगदितं शृण्वन्कर्णामृतं वचः ।
प्रत्युवाच प्रसन्नात्मा स कामी वामलोचनाम् ॥ ९६ ॥
अभ्यर्थनीयमतिरागजुषा मया य-
न्मुग्धे त्वयैव गदितं तदिदं तथापि ।
एतावदद्य कथयामि शपे कुचाभ्या-
माभ्याममुं जनमवेहि तवैव दासम् ॥ ९७ ॥
इति कृतसमयोऽसौ कल्यमुत्थाय गत्वा
द्विजवरगृहमारादात्मगेहोपमानम् ।
विहितसकलकृत्यो मृष्टमास्वाद्य चान्नं
सपदि मुदितचेताः प्राप कान्तानिकेतम् ॥ ९८ ॥
सा च स्नानाद्यखिलमविलम्बेन निर्वर्त्य कृत्यं
पत्युः प्रत्यागमनपदवीदत्तनेत्रारविन्दा ।
भूयोभूयः किमपि रजनीवृत्तमेव स्मरन्ती
पुष्पामोदात्पुलकिततनुः स्वैरमास्थादलिन्दे ॥ ९९ ॥
आयातेन समं प्रियेण सुमुखी सा प्राप्य वासालयं
स्वच्छप्रच्छदभाजि केलितलिमे तन्वी शयाना सुखम् ।

---

१. नायिका.

अन्यूनप्रणयप्रवाहसुभगैराकाङ्क्षितैश्चेतसा
तैस्तैर्नर्मभिरुन्मिपत्परिमलैरह्नाय निन्ये दिनम् ॥ ६० ॥

क्षणादस्तं याते दिनकृति शनैर्वाति पवने
समादायामोदं दरदलितजातीसुमनसाम् ।
समारूढे चेन्दौ गगनममृतस्यन्दिकिरणे
स्मरोन्मादावेगादधिकविवशौ तावभवताम् ॥ ६१ ॥

गतनिजपरभावं गाढगाढप्रहारं
मणितभरितगेहं मञ्जुभूपाविरावम् ।
सुरतमधिकमासीदुद्धतं चित्तरङ्गे
सति मदनविलासे कामिनां का व्यवस्था ॥ ६२ ॥

समदिवसनिशीथं क्रीडतोरेवमेव
क्षणवदविदितांशा वत्सराः केऽपि याताः ।
न च सुरतसुखे तौ वीततृष्णावभूतां
न खलु विपयसङ्गः शीलनेनैति शान्तिम् ॥ ६३ ॥

इत्थं निवसतोः स्वैरं नित्यं प्रत्यग्रयोस्तयोः ।
कदाचित्स्वगृहं याता वयस्या कार्यगौरवात् ॥ ६४ ॥

शय्योत्थायमथैकदा प्रियतमे याते प्रभातागमे
निद्राशेपनिमीलिताक्षिकमला तन्वी शयाना क्षणम् ।
दुर्वारं खलु दैवदुर्विलसितं स्वप्ने स्वयं सा विलो-
क्यान्यासङ्गिनमात्मवल्लभमतिक्रुद्धा विबुद्धाभवत् ॥ ६५ ॥

निद्राविरामसमयेऽपि रुपा स्फुरन्त्या
मुद्रादरिद्रतरया परिवृत्तचेताः ।
स्वप्नानुभूतमपि वस्तु तदस्तधैर्या
तन्वी चिराय परमार्थतयैव मेने ॥ ६६ ॥

सा भामिनी परुपरोपनिवीतचित्ता
नैवोच्चचाल शयनादतिदूयमाना ।

---

१. प्रत्यहं नूतनयो..

